। श्री भावचन्द्रसूरिविरचितम् ।

# । श्री शान्तीनाथ चरितम्. ।

( संस्कृतगद्यात्मकम् )

संस्कृताल्पज्ञानां साधुसाध्व्यादीनामुपकारकमिदमिति ज्ञात्वा पंन्यासश्रीचतुरविजय-
मुनिवराणां सदुपदेशाच्छ्रीपिचुमन्दग्रामवासिसंघकृतार्थिकसाहाय्येन
विद्वद्द्वारा संशोध्य

तच्च

भावपुरस्थश्रीजैनधर्मप्रसारकसंसदा आनन्दाख्ययंत्रालये मुद्रापयित्वा
प्राकाश्यं नीतम्.

वीर संवत् २४३७. विक्रमसंवत् १९६७. शालिवाहनशाके १८३४.

॥ प्रभूताद्भुततरानेककथानकस्थसरसानन्दसन्दोहशालीदं चरितं गीर्वाणज्ञा-
पाध्येतृसाधुसाध्वीभ्यो लिखितसंस्कृतग्रन्थज्ञानागारेभ्यश्चोपदीकरिष्यते ॥

# । भूमिका ।



श्रीशान्तिनाथजिनस्य चरितं गीर्वाणभाषायामनेकैराचार्यै रचितं दृश्यते । तत्र श्रीमुनिभद्रसूरिविरचितं पद्यात्मकं चरितं सांप्रतमेव श्रीवाराणसीस्थजैनपाठशालायां प्रकटीभूतमस्ति । अन्यच्च श्रीअजितप्रभसूरिकृतं पद्यात्मकं श्रीकलिकत्तास्थया एशियाटिकसोसाइटीसंज्ञया संस्थयाऽधुनैव प्रकटिष्यते। अपरं चेदं श्रीभावचन्द्रसूरिविरचितं गद्यात्मकं श्रीपिचुमन्दपुरी ( लिम्बडी ) निवासिसंघकृतार्थिकसाहाय्येनास्माभिः शोधयित्वा मुद्रापितमस्ति। किं चास्य परमात्मनश्चरितं श्रीहेमचन्द्राचार्यविरचितं त्रिषष्टिशलाकापुरुषचरितान्तर्वर्तिपञ्चमपर्वण्यपि प्रकटितं सुप्रसिद्धमेव समस्ति । अन्यान्यप्यनेकान्यस्यैव जिनस्य चरितान्यन्यान्याचार्यकृतान्यप्रकटावस्थानि परिवर्तन्ते । तत्र सर्वेषु मध्य इदमेवैकं गद्यात्मकं दृग्गोचरं जातमस्ति । गद्यात्मकमिदमृजुभाषात्वेन सर्वविद्वज्जनानामुपकारकारि विशेषतश्च बालानाम् । रससन्दोहश्चात्रापूर्व एव, यत इदं हस्तगतमेव संपूर्णं वाचयितुं समुत्सुका एव भवन्ति सहृदया इति निःशंकं ब्रूमः ।

षट्सर्गस्यास्य प्रथमे सर्गे श्रीशान्तिनाथस्य पूर्वभवः श्रीषेणसंज्ञकः, तद्भार्याद्वितयं, तदाश्रिता च सत्यभामा नाम कपिलपुरोहितभार्या, इत्येतेषां चतुर्णां भवो वर्णितः । अनन्तरभवे चोत्तरकुरुषु युगलद्वयं, तृतीये च भवे चतुर्णामपि तेषां सौधर्म-

कल्पे देवत्वेनोत्पत्तिरित्येतद्भाववर्णितम् ।

चतुर्थभवे श्रीषेणजीवोऽमिततेजा नाम विद्याधरो भवति । तद्भार्याभिनन्दिताजीवश्च त्रिपृष्ठवासुदेवपुत्रः श्रीविजयो नाम भवति । अपरराज्ञीसत्यभामाजीवौ च तयो राज्ञ्यौ भवतः । श्रीविजयश्च तदा वासुदेवनिदानं करोति । पञ्चमे च भवे तौ भूमिपती दशमे देवलोके समुत्पद्येते । राज्ञ्योश्च संबन्धोऽग्रे न विद्यते । इत्येतद्द्वितीयसर्गे वर्णितम् ।

षष्ठसप्तमभवाधिकारे तृतीयसर्गे दशमात्कल्पाच्च्युत्वाऽमिततेजोजीवः पूर्वमहाविदेहक्षेत्रेऽपराजितनामा बलभद्रः, श्रीविजयजीवश्चानन्तवीर्यनामा वासुदेवो जायते । ततोऽपराजित आयुःक्षये द्वादशकल्पे उत्पद्यते । अनन्तवीर्यश्च प्रथमनरके द्विचत्वारिंशद्वर्षसहस्रायुर्नारको भूत्वा ततो मेघनादनामा विद्याधरो भूत्वा चारित्रं च गृहीत्वा द्वादशे कल्पे समुत्पद्यतेऽतस्तस्य भवद्वयाधिक्यं । इत्यादि वर्णितम् ।

चतुर्थसर्गे श्रीशान्तिजिनस्याष्टमनवमभवाधिकारोऽस्ति । तत्रापराजितबलभद्रजीवः क्षेमंकरजिनपुत्रो वज्रायुधनामा चक्री, वासुदेवजीवश्च तत्पुत्रः सहस्रायुधनामा भवति । अत्र चानेकजीवानां पूर्वभवादिकाः प्रासंगिकाः कथा व्यावर्णिताः । वज्रायुधश्चात्रापि भवेऽवधिज्ञानी जातः । ततश्चारित्राराधनेन तौ नवमग्रैवेयकेऽहमिन्द्रत्वेनोत्पद्येते ।

पञ्चमसर्गे श्रीजिनस्य दशमैकादशभवाधिकारः । तत्र दशमे भवे तौ द्वावपि ग्रैवेयकाच्च्युत्वा घनरथतीर्थकृतो मेघरथदृढरथनामानौ तनुजौ जायेते । अत्रापि मेघरथस्यावधिज्ञानित्वमस्ति । स च पौषधव्रतस्थः शरणागतपारापतं स्वमांसदित्सया

रक्षति । अत्यसनीयोऽयमहिंसाधर्मस्य पराकाष्ठादर्शकोऽधिकारः । स च चारित्रं गृहीत्वा विंशतिस्थानकाराधनेन तीर्थकृन्नामकर्मार्जयित्वायुःप्रान्ते सानुजः सर्वार्थसिद्धिविमानं गच्छति ।

चरमद्वादशभवाधिकारे षष्ठे सर्गे मेघरथजीवः श्रीशान्तिनामा चक्री भवति । दृढरथजीवश्च तत्पुत्रश्चक्रायुधनामा भवति । स च श्रीशान्तिजिनस्य केवलज्ञानानन्तरं प्रथमगणधरो भवति । सर्गेऽत्र भगवतः पञ्चापि कल्याणकानि प्रासंगिककथानकानि च संगृहीतानि । प्रान्ते भगवन्निर्वाणेन सह सर्गचरित्रयोः समाप्तिः कृतास्ति । चक्रायुधोऽपि तत्रैव एव सिद्धिं गतः ।

श्रीशान्तिनाथजीवस्य सर्वोत्तम उत्तरकुरुक्षेत्रे युगलिकेषु पूर्णायुष्कत्वेनोत्पत्तिः, भवद्वये प्रबलभाग्याविनाभूतं तीर्थकृत्पुत्रत्वं, उपान्त्यमनुजभवद्वयेऽपि ज्ञानस्य प्रबलक्षयोपशमसूचकमवधिज्ञानित्वं, द्विश्चक्रित्वं वज्रायुधचरमभविकं, सकलबलभद्रत्वं चेत्येतत्सर्वं सर्वोत्कृष्टत्वं सूचयति । एतावता सा कापि पुण्यसंपन्नास्ति याऽनेन प्रभुणा नानुभूतेति व्यक्तमस्यानन्यसममाहात्म्यं । अतोऽस्य महापुरुषस्य यावद्गुणगणगानं तावत्सर्वं न्यूनतरमेव ।

अत्र चरित्रे षट्स्वपि सर्गेषु प्रासंगिका अनेकाः कथाः संगृहीताः । तथा हि—प्रथमसर्गे धर्माराधनविषये मंगलकलशकथानकं रसमयं वर्तते, यस्य रासकोऽप्यन्यकविकृतो मुद्रितोऽस्ति । द्वितीयसर्गे धर्मान्तरायनिषेधे मत्स्योदरकथानकं विद्यते, यस्य रासकोऽमुद्रित एवास्ते । तृतीयसर्गे मित्रानन्दामरदत्तयोः सङ्गसंदर्शितं कथानकं अल्पदुष्कृतस्यापि सुमहाफलोदयैकनिदर्शनं वर्तते, अस्यापि रासकोऽमुद्रितो विद्यते । एतत्कथान्तर्गतजिनपालितजिनरक्षितकथानकमिन्द्रियविषयत्यागविषयं वर्तते । नृसिंहराज-

पिकथापि चात्र रसिका रचितास्ति । चतुर्थसर्गेऽमृताम्रविनाशादिप्रसंगोपरि देवराजकथा समस्ति, यस्यां रात्रिप्रहरत्रये कथितं सहसाकर्मनिषेधपरं कथानकत्रयं सुबोधकरं वर्तते । अत्र च सर्गे चतुःप्रकारधर्माराधनविषयं पुण्यसारकथानकं, औत्पातिकीबुध्धिविषयं रोहकदृष्टान्तं, अन्यानि च संक्षिप्ता-यनेकानि कथानकानि सुललितानि विद्यन्ते ।

पञ्चमसर्गे धर्मकार्ये प्रमादत्यागविषयं सूरराजापरपर्यायवत्सराजकथानकं सविस्तृतं, पारापतरक्षणप्रसंगे च निषादवानरीकथानकं मनोहरं, अन्यान्यपि पूर्वजवादिवर्णनानि प्रासंगिकानि बहूनि सन्ति ।

षष्ठे च सर्गे केवलज्ञानोत्तरं जगवद्भाषितकथासन्दर्भः सुमहानस्ति । तत्र विषयत्यागे गुणधर्मकुमारकथा, कषायत्यागे नागदत्तगान्धर्वकथा, श्राध्धद्वादशव्रतविषये च क्रमेण यमपाशमातंगस्य, जद्रश्रेष्ठिनः, जिनदत्तस्य, करालपिंगलस्य, सुलसस्य, स्वयंजूदेवस्य, जितशत्रुनृपनित्यमंकिताब्राह्मण्योः, समृध्धदत्तस्य, सिंहश्रावकस्य, गंगदत्तश्राध्धस्य, जिनचन्द्रस्य, शूरपालनृपस्य च सुविस्तरतराः सुरसाः कथा व्यावर्णिताः । तत्र पञ्चमव्रतकथायां संलेखनाप्रसंगे जिनशेखरश्राध्धकथानकमप्यन्तर्भूतं रचितमस्ति । प्रान्ते सुपात्रदानविषये व्याघ्रक्षत्रियस्य कथानकं संनिबध्धं । ततश्चक्रायुधगणधरेण स्वदेशनावसरे रत्नचूडकथा कथितास्ति । अस्य रासकः सुप्रसिध्धोऽस्ति । अत्र सर्गे पञ्चशःशालिकप्रदातृश्रेष्ठिकथाप्युपदेशदात्री विद्यते । अन्ते च जगवत्परिवारसंख्याकथनानन्तरं सिद्धस्वरूपस्य सुविस्तृतवर्णनावसरेऽरण्यवासिजिल्लदृष्टान्तं सुबोधं बोधितमस्ति । किं बहुना? अत्र ग्रन्थे चित्ताह्लाददायिकथासंग्रहः सुमहान ग्रथितोऽस्ति ।

एतावतास्य चरितस्य रसिकता पठनीयता गुणलाजनता च सुज्ञेयेत्यलं विस्तरेण ।

अस्य ग्रन्थस्य प्रशस्तिः कर्त्रा न गुंफितेति अस्य रचनावसरादि कर्तुश्चान्या कृतिर्विद्यते न वेत्यादि न ज्ञायते ।

अत्र व्याकरणादिदोषशुद्धये यथाशक्ति प्रयासे कृतेऽपि दृष्टिदोषवशात् मतिमान्द्यवशात् मुद्रायंत्रप्रमादवशाच्च यत्र यत्र दोषो दृष्टिपथमवतरति विदुषां चेतसि, स स दोषो विद्वद्भिः शोधयित्वाऽस्माकं ज्ञापनीयः, यतो द्वितीयावृत्तौ दूरीकरिष्यते ।

चरित्रस्यास्य मुद्रापणार्थं पिचुमन्दपुर्यां पंडितश्रीचतुरविजयमुनिवरकारितोपधानप्रसंगागतज्ञानद्रव्यमध्यतः कियद्रव्यमस्माकं प्रेषितमतोऽस्य मुद्रापणप्रयासे वयं सोद्यमा जाताः । चरितस्यास्य रसिकतया सरलतया धर्मोपदेशकतया प्रभूतजनोपयोगितया चाचिरादेव द्वितीयावृत्तिसमयं संभावयामः । अनेनैव पंडितपदविभूषणेन मुनिवरेण गद्यात्मकं श्रीपार्श्वनाथचरितमपि मुद्रापयितुं वयमाज्ञप्ताः । तदर्थं चान्यसुश्राद्धद्वारार्थिकसाहाय्यमपि दापितमस्ति । मुनिपुंगवैर्धनाढ्यश्रेष्ठिश्रेष्ठैश्चेदृशसाहाय्यमनुकरणीयमस्ति मद्भूतज्ञानार्थम् ।

प्रान्ते कथंचित् क्वचिद्दोषविषयशुद्ध्यर्थं क्षमायाचनपूर्वकमियं प्रस्तावना समाप्यते । तथा चास्य चरितस्य पठने पाठने श्रवणे श्रावणे ज्ञानस्य ग्रहणे ग्राहणे च संस्कृतबोधशालिनो मुनयः प्रार्थ्यन्ते, तथैव च ते वर्त्स्यन्त इत्याशास्महे, यतोऽयमस्माकं प्रयासः फलेग्रही स्यादिति शम् ॥ तथास्तु.

ज्येष्ठशुक्लपूर्णिमा } श्री जैनधर्मप्रसारक सभा

सं० १९६७ } भावनगर.

# ॥ श्री शान्तिनाथचरितम् ॥

## श्री शान्तिनाथाय नमः ॥

प्रणिपत्यार्हतः सर्वान्, वाग्देवीं सद्गुरूनपि ।
गद्यबन्धेन वक्ष्यामि, श्रीशान्तिचरितं मुदा ॥ १ ॥

सर्वे संसारिणो जीवा अनन्तशोऽनन्तकालं भवभ्रमणं कुर्वन्तः सन्ति । परंतु येन प्राणिना *क्षायिकसम्यक्त्वं यदा समुपार्जितं, तदा तस्य भवसंख्या स्यात् । यथा श्रीऋषभदेवेन धनसार्थवाहभवे [1]श्रेष्ठतपोनिर्मलगात्राणां पवित्रचारित्राणां सत्पात्राणां तपस्विनां [2]आज्यमाज्यदानं प्रददे । तत्पुण्यप्रभावेण त्रयोदशमे भवे तीर्थंकरपदवी संप्राप्ता । अपरेषामपि जिनानां बोधिलाभप्रभावाद्भवसंख्यासंजाता । तथा श्रीशान्तिजिनेन्द्रस्य द्वादश भवाः कथ्यन्ते । तेषामाद्यभवः कथ्यते—

इहैव जंबूद्वीपे भरतक्षेत्रेऽनन्तरत्ननिकेतनं श्रीमद्रत्नपुरं नाम पत्तनमस्ति । तस्मिन् पुरे न्यायधर्मैकनिपुणः परोपकारप्रवीणः स्वप्रजापालनतत्परः शत्रुपादपोन्मूलनसिन्धुर[3] औदार्यधैर्यगांभीर्यादिगुणबन्धुरः श्रीषेणनामा भूपतिरभूत् । तस्य वामांगहारि-

* अन्यसम्यक्त्वलाभेऽपि भवसंख्यागणन भवति । तथाऽप्यत्र क्षायिकस्य ग्रहणं कृत, तच्चिन्त्यम् । १ षष्ठ—सुष्ठु इति वा. २ प्रभुत घृतदानम् ३ सिन्धुरोहस्ती

एयौ[1] शीलालंकारधारिण्यौ द्वे जार्ये । एकाऽजिनन्दिता द्वितीया सिंहनन्दिता । एकदा आग्रमेयसी ऋतुस्नानानन्तरं सुखशय्यायां सुप्ता समधातुशरीरा सती यामिन्यां स्वप्नमध्ये निजोत्संगवर्तिनौ मयूखशालिनौ प्रध्वंसितान्धतमसौ सूर्याचन्द्रमसौ ददर्श । तद्दर्शनेन सा राज्ञी हर्षप्रकर्ष[2] दधौ । ततः स्वधिया तयेत्थं[3] चिन्तितम्—" शास्त्रविद एवं वदन्ति जव्यतरस्वप्नं वीक्ष्य कस्यचित्पुरतो[4] न कथ्यते, यावत्[5] शयनमपि न कर्तव्यं " । अतः कारणाद्विनिद्रा सती तं स्वप्नं प्रातःकाले स्वजर्तुः कथयामास । ततः सोऽपि नृपः स्वबुद्ध्या शास्त्रदृष्ट्या च तदा विचार्य प्रसन्नवचरा स्वप्रियायै तत्फलमित्थं शशंस—" हे देवि ! एतत्स्वप्नमहिम्ना युग्मजातौ जुवि ख्यातौ कुलोद्योतकरौ पुत्रौ जविष्यतः " । एवं श्रुत्वा सा नृपप्रिया मुदिता । ततश्च सा गर्जद्वयं दधती निरन्तरं[6] तिष्ठति । ततः संपूर्णसमये शुजग्रहनिरीक्षितवेलायां तया पुत्रद्वयं सुषुवे । ततः पित्रा महोत्सवपुरःसरं दशाहिकामतिक्रम्य तयोः पुत्रयोरिन्दुषेणः बिन्दुषेण इति नाम्नी विनिर्ममे । तन्नाम्ना तौ द्वावपि लाल्यमानौ प्रवर्धमानौ क्रमेणाष्टवार्षिकौ जातौ । ततश्च राज्ञा तौ द्वावपि कलाचार्यसमीपे मुक्तौ कलाज्यासं कारितौ क्रमेण यौवनं प्राप्तौ ॥

इतश्चात्रैव जरते मगधनाम्नि देशे श्रियाजिरामोऽचलनामा ग्रामोऽस्ति । तत्र धरणिजटाजिधानो द्विजपुंगवो वेदवेदांगविचक्षणो वसति । तद्भार्या यशोजद्रा । तत्कुक्षिसंजवौ नन्दिजूतिश्रीजूतिनामानौ पुत्रौ बजूवतुः । पञ्चवर्षानन्तरं तौ नन्दनौ यत्नतो निरन्तरं स विप्रो वेदशास्त्रं पाठयामास । तथा दास्याः कपिलायाः पुत्रः कपिलनामा । सोऽपि द्विजनन्दनः । परंतु जातिहीनत्वात्तस्य प्रज्ञाधिकस्यापि वेदशास्त्रं द्विजो न पाठयति स्म । परंतु कपिलः शृण्वानोऽपि चतुर्दशविद्याविशारदोऽजूत् । स कपिलस्तस्मिन् ग्रामे

१ श्रियौ. २ प्रहर्षमिति पाठ ३ तया लिख्यम्. ४ यस्य तस्य पुरतो. ५ यावता निद्रापि न कर्तव्या. ६ नितरां शुशुभे

जातिहीनतया मानमलभमानो गृहान्निःसृत्य यज्ञोपवीतयुग्मं वहन् महाब्राह्मणसममात्मानं मन्यमानो ब्रह्मक्रियाकुशलो वेदवेदांगनिपुणो महीं भ्रममाणः श्रीरत्नपुरपत्तनमाययौ। तत्र सत्यकिनामा महोपाध्यायः स्वलेखशालायां बहून् छात्रान् वेदशास्त्रं पाठयति स्म। कपिलस्तत्र समेतः। स छात्रान् पाठयन् दृष्टः। तदा स्वकीयचातुर्यप्रकाशनाय तेन कपिलेन तदीयछात्रसमीपे कश्चिद्वेदपदार्थः पृष्टः। तदा सत्यकिना हृदि चिन्तितम्—"महान् पंडितोऽयं, यतः पृष्टं वाक्यं ममापि नोत्पद्यमानमस्ति, मदीयच्छात्रस्य कथं समर्थता स्यात्प्रत्युत्तरदाने?" इति विचिन्त्य तन्मध्ये महोत्कृष्टं विद्यागुणं दृष्ट्वा स्नानदानसावित्री*स्मरणादिब्रह्मक्रियायोग्यं विज्ञाय स्वपदे संस्थापितः। गुणैः कस्य चेतो न मन्यते? अपि तु सर्वेषामपि।

अथ तस्य सत्यकिपंडितस्य जंबुका नाम गेहिनी बभूव। तत्कुक्षिसंभवा सत्यभामा पुत्री, सापि गुणवती रूपवती, परंतु कुमारिकास्ति। तदा तेनोपाध्यायेन हृदि चिन्तितम्—"एतस्या योग्योऽयं वर" इति ध्यात्वा तस्य तां पुत्रीमुपाध्यायो ददाति स्म। अथ स कपिलस्तया सार्धं स्वेच्छया रममाणो विषयसुखं भुञ्जानः सुखेन तस्थौ। उपाध्यायेन सन्मानित इति कारणाज्जनैरपि कपिलः सत्कृतः। विद्वत्सभासु विशेषतः सन्मानं लभते। राजसभायामपि प्रसिद्धः संजातः। अथान्येद्युः परिरक्षितदुःकालो वर्षाकालः प्रादुर्बभूव। तस्मिन् समयेऽन्यदा कपिलो रात्रौ कौतुकार्थी देवकुलेषु नाटकादिविलोकनार्थं गतः। तत्र प्रेक्षणसंगीतादिविनोदेन बह्वी निशा गता। तदा नाटकं विसृष्टम्। सर्वः कोऽपि जनः स्वस्थानमगमत्, कपिलोऽपि। रात्रौ मेघान्धकारे तोयदे प्रवर्षति मार्गे कोऽपि गच्छन्नागच्छन्न दृश्यते। तदा कपिलेन स्वमनसि चिन्तितम्—"मुधा किं वस्त्रे आर्द्रीकरोमि? संप्रति मार्गोऽपि निःसंचरः

---

* गायित्री.

संपन्नोऽस्ति " इति ध्यात्वा स वाससी संवृत्य कक्षान्तरे निक्षिप्य नग्न एव निजगृहे समेतः । ततो गृहद्वार आगत्य वस्त्रे परिधाय गृहमध्ये प्रविष्टः । तद्भार्या गृहमध्यादन्यवाससी समानीय तं प्रतीति प्रोचे—" हे प्राणेश ! जलक्लिन्ने चीवरे मुञ्च, इमे परिधेहि " । तदा तद्वचः श्रुत्वा कपिलः प्राह—" हे प्रिये ! मंत्रशक्त्या मम वस्त्रे न क्लिन्ने, यदि संशयोऽस्ति तर्हि विलोकय " । तदा सा सविस्मयं करस्पर्शेन विलोकयामास । ते तथाविधे ज्ञात्वा यावत्साश्चर्या मनसि विचिन्तयति, तावता विद्युदालोके तस्यांग जलार्द्रं दृष्ट्वा सा कुशाग्रधीः सत्या[1] स्वमनसीत्थं विचिन्तयति—" नूनं दृष्टिजयेन वाससी गोपयित्वा नग्न एवायं पथि समाययौ[2], वृथात्मानं प्रशंसति । अनया चेष्टया नैष कुलीनो विज्ञायते । तस्मादस्य गृहवासेन मम विडंबनैव " । इति विचिन्त्य सा तस्मिन्मन्दरागाभूत् । परंतु बाह्यवृत्त्या गृहवासं प्रतिपालयति स्म ॥

इतश्च यः कपिलपिता विप्रः स प्रचुरविद्यावानपि कालेन कर्मदोषेण निर्धनो जातः । तदा तं कपिलनामानं पुत्रं विभूतिमन्तं लोकपूजितं ज्ञात्वा स धनार्थी सन् तद्गृहे प्राघूर्णिकः समागतः । भोजनावसरे किमपि मिषान्तरं कृत्वा स कपिलो जनकात् पृथगुपविष्टः । तदा तस्या विशेषेण मनोगता भ्रान्तिरासीत् । एकान्ते विप्रस्तया शपथपूर्वमेवं पृष्टः—" हे तात ! भवतामेष सुतोऽङ्गजो वाऽन्यः ? " इति पृष्टे तेन यथातथं बभाषे । तदा तस्या मनसि निश्चयो जातः । कपिलेन किञ्चिद्दत्वा स्वजनको विसृष्टः स्वस्थानं गतः । तदनन्तरं सत्यभामा कपिलविषये विरक्ता सती गृहान्निःसृत्य श्रीषेणनृपसमीपं गत्वाञ्जलिं कृत्वा तं प्राह—" हे देव ! त्वं जगतीनाथः पञ्चमो लोकपालस्त्वं, तथा दीनानाथानां त्वं शरणं, त्वं गतिः । ततः कारुण्यं कुरुष्व ममोपरि " । तदा नृपतिस्तां

1 सत्यासत्यभामा. मत्या इति पाठान्तरे बुद्ध्या 2 समियाय.

प्राह—“ हे भद्रे ! ते दुःखस्य कारणं ब्रूहि । त्वत्पिता सत्यकिरस्माकं पूज्यस्त्वं तु तत्पुत्री कपिलस्य गेहिनी ततो विशेषतो मान्या,
कारणं दुःखस्य कथय ”। इत्युक्ते सा प्राह—“ हे राजन् ! यो मम भर्ता कपिलनामा, स तु हीनकुलत्वेन दूषितः ”। राज्ञा पृ-
ष्टम्—‘ भद्रे ! त्वया कथं ज्ञातम् ?’। तदा तया कपिलस्वरूपं समग्रमपि राज्ञोऽग्रे निगदितम् । तया पुनरित्थं बभाषे—“ अनेन
गृहवासेन मम पर्याप्तम् । तथा कुरु नृपते ! यथाहं विमलं शीलं पालयामि । अहं त्वदीयशरणं प्राप्तास्मि ”। तयेत्युक्ते राज्ञा कपि-
ल आकारितः। तस्य साक्षसमिति भणितम्—“ भो कपिल ! एषा त्वदीया प्रिया सत्यभामा त्वयि विषये विरक्तास्ति । तत इमां
विगतस्नेहां मुञ्च । यया पितृवेश्मवन्मदीयमंदिरे स्थिता शीलालंकृता कुलोचितं धर्मं कुरुते ”। नृपेणेत्युक्ते कपिलोऽप्याह—“ स्वा-
मिन्निमां विना क्षणमप्यहं स्थातुं न क्षमः, तदियं कथं मुच्यते ? ”। इति कपिलोक्तं वचः श्रुत्वा राज्ञा सत्यभामा पृष्टा—“ भ-
द्रे ! यद्ययं त्वां न मोक्ष्यति, तर्हि किं करिष्यसि ? ” इत्युक्ते तया प्रोक्तम्—“ यद्यस्मादकुलीनान्मे मोक्षो न भावी, तदाहं प्राण-
त्यागं निश्चयेन करिष्यामि ”। इति तद्वचनं निशम्य राज्ञा पुनरपि कपिलस्य निगदितम्—“ हंहो यद्येतां बालां त्वं बलाद्ग्रहिष्य-
सि, तर्हि नूनं तव स्त्रीहत्यापातकं लगिष्यति । त्वं कथं पापान्न बिभेषि ?। ततो यदि ते रोचते, तर्ह्यस्मद्राज्ञीसमीपस्था जनकगेह इ-
व तिष्ठतु कियन्ति दिनानि ”। इत्युक्ते कपिलेनानुमतम् । ततः सत्यभामा सुविनीता सुशीला सती नृपप्रियासमीपे सुखेन तस्थौ ॥

अन्येद्युस्तत्र श्री विमलबोधसूरयः[1] पृथ्व्यां विहरन्तः समागता निरवद्यस्थाने स्थिताः । ततः सूरीणामागमनं जनमुखा-
च्छ्रुत्वा तद्वन्दनार्थं श्रीषेणनृपतिः सपरिच्छदो ययौ । तत्र गत्वा सूरिं नत्वा यथास्थानमुपविष्टो नृपः । तं नृपमुद्दिश्य सूरिभिर्धर्मदे-

१ श्री विजयविमल.

ज्ञाना प्रारेभे—"हे राजन्! ये मानुष्यकादिसामग्रीं प्राप्य प्रमादतो धर्मं न कुर्वन्ति, तेषां जन्म निरर्थकं ज्ञेयम्। तथा च ये प्राणिनो जैनधर्मं समाराध्य भिन्नवभाजनं भूत्वा सिद्धिसुखं प्राप्ताः, ते श्लाघ्याः। किंवत्? मंगलकुम्भवत्"। तदा राज्ञा श्रीषेणेन पृष्टं—"को मंगलकलशः? प्रसादं कृत्वा तत्कथां कथयन्तु"। सूरयः प्राहुः—"सावधानतया भो नृप! श्रूयतां तद्यथा—

उज्जयिन्यां महापुर्यां वैरिसिंहो[1] राजा। तत्प्राणवल्लभा सोमचन्द्रा प्रियाभूत्। धनदत्तनामा श्रेष्ठिपुंगव आसीत्। स किं लक्षणः? सुविनीतः सत्यशीलदयान्वितो गुरुदेवार्चनतत्परः परोपकारप्रवर ईदृशः श्रेष्ठी। तद्भार्या सत्यभामा। सापि सुशीला पत्यौ प्रेमपरा, परंतु सन्तानविवर्जितास्ति। एकदा सा श्रेष्ठिनं सुतचिन्ताम्लानवदनं वीक्ष्य पप्रच्छ—'हे कान्त! किं ते दुःखस्य कारणं?' तदा श्रेष्ठी यथातथं बभाषे। तद्वचः श्रुत्वा श्रेष्ठिनी पुनरप्याह—"हे प्राणनाथ! चिन्तयालम्। इहलोके परलोके च नृणां समीहितार्थदायको धर्म एव। अतः कारणात् स एव विशेषेण सेवनीयः सुखेन[2]"। इत्युक्ते श्रेष्ठिना जगदे—'कया युक्त्या धर्मः क्रियते? तत्प्रिये कथ्यताम्'। श्रेष्ठिनी प्राह—"हे स्वामिन्! देवाधिदेवश्रीजिनविषये पूजां सुगुरोर्भक्तिं कुरुष्व, पात्रेभ्यो दानं देहि, सिद्धान्तपुस्तकानि लेखय, एवं धर्मध्यानं कुर्वतो यदि पुत्रो भावी, तदा वरं, कदाचित् पुत्रो न भविता, तर्हि नाथ परलोके[3] निर्मलमखंडसौख्यं भविष्यति"। एतद्वाक्यं श्रुत्वा श्रेष्ठी हृष्टोऽवादीत्—"प्रिये! त्वया साधूक्तम्। सम्यगाराधितो धर्मश्चिन्तामणिकल्पद्रुमतुल्यतां दधाति"। इति निश्चित्य स्वमनसि देवपूजार्थं पुष्पग्रहणाय श्रेष्ठिनारामिकं समाकार्य तस्मै धनं घनं ददे। ततश्च प्रत्यहं निरन्तरमेव प्रगे समुत्थाय श्रेष्ठी स्वयमेव वाटिकां गत्वा सद्यः कुसुमान्यानीय स्वगृहप्रतिमार्चनं विधाय नगरमध्यस्थजिनालये

१ वैरसिह—वेरसिह   २ सुरौषिणा   ३ परलोको निर्मलो भाविष्याति

गच्छति । तत्र ( द्वारे ) नैषेधिकीमुख्यान् यथास्थानं दश त्रिकान् सत्यापयन् परया भक्त्या चैत्यवन्दनां विदधे । ततः साधून्नत्वा विधिं विधाय प्रत्याख्यानं कृत्वा सुमुनीनां[1] संविभागं चक्रे। एवं तस्य श्रेष्ठिनः समस्तमप्याह्निकं रात्रिकं सर्वशर्मकृद्धर्मकर्म कुर्वतः शासनाधिष्ठायिनी देवी सन्तुष्टा पुत्रवरं प्रत्यक्षीभूय ददौ । तेन वचसा स प्रमुदितः श्रेष्ठी । इतश्च पुण्यप्रसादाद्देवतादेशाच्च श्रेष्ठिनी यस्यां रात्रौ पुत्रगर्भं दधौ, तस्यां निशि तया स्वप्ने हेममयः पूर्णकलशो मंगलान्वितो दृष्टः । तदा सा जजागार । प्रमुदिता समभूत् । क्रमेण परिपूर्णसमये शुभवेलायां पुत्रो जातः । तदा महोत्सवो बभूव । पित्रा दीनदुःस्थितानां स्वर्णरत्नादिदानं दत्वा समग्रस्वजनमेलापकसमक्षं स्वप्नानुसारेण मंगलकलश इति नाम व्यधीयत । ततः स क्रमेण प्रवर्धमानो विद्याभ्यासं कुर्वन्नष्टवर्षप्रमाणोऽजनिष्ट । अन्यदा तेनेति पृष्टम्—" हे तात ! नित्यं त्वं प्रातः समुत्थाय क्व यासि ? " तदा पित्रा प्रोक्तम्—' प्रतिदिनं देवपूजार्थं वाटिकायां पुष्पग्रहणार्थं यामि ' । सुतेनोचे—' अहमपि सार्धं समेष्यामि ' इत्युक्ते जनकेन वार्यमाणोऽपि तद्दिने सार्धं ययौ । आरामिकेण श्रेष्ठिसुतं विज्ञाय तस्य बालकस्य प्रीतये नारिंगजंबीरककरणादीनि सुस्वादूनि फलानि दत्तानि । ततः श्रेष्ठी प्रसूनान्यादाय[2] सपुत्रः स्वगृहे गतः । तस्मिन् दिने श्रेष्ठिना पुत्रेण सह स्नानार्चनभोजनादि कृतम् । ततः सुतो लेखशालामगात् । तदनन्तरं द्वितीयवासरे महताग्रहेण वाटिकायां पुत्र एकाक्येव पुष्पाण्यादातुं ययौ । आरामतश्चारुपुष्पाणि गृहीत्वा समागात् । ततस्तेन पितुरित्थं निवेदितम्—" अथाहमेव कुसुमग्रहणाय यास्यामि । ततो भवद्भिर्धर्मध्यानपरैः स्वगृह एव स्थातव्यम् " । तदीयवचसा तेनानुमतम् । ततो निरन्तरं वाटिकातः सुतः कुसुमान्यानयति । श्रेष्ठी सुखेन देवार्चनं करोति । एतावता यज्जातं, तन्निशम्यताम्—

१ स मुनीनां २ प्रसूनानि पुष्पाणि.

अत्रैव भरतक्षेत्रे चंपा नाम महापुरी विद्यते । तत्र सुरसुन्दरो राजा । राज्ञी गुणावली । एकदा सा स्वप्नमध्ये निजोत्संगे कल्पलतां दृष्ट्वा जागरूका सती भर्तुः कथयामास । तदा राज्ञा स्वधिया विचार्य प्रोक्तम्—'एतत्स्वप्नप्रभावात्सर्वलक्षणसंपूर्णा पुत्री भविष्यति'। इति निशम्य सा मुमुदे । ततः परिपूर्णसमये सुता प्रसूता । महीपेन तस्यास्त्रैलोक्यसुन्दरीति नाम विदधे । क्रमेण प्रवर्धमाना तारुण्यं वयः प्राप्ता सती लावण्यसौभाग्यनिकेतनं जाता । एकदा तां मनोहरांगीं सुतां दृष्ट्वा राजा हृदि वरचिन्तामकरोत् तदान्तःपुरीभिर्विज्ञप्तम्—"राजन्नेषा बालिकास्माकं जीविताधारः । एतद्विरहं सोढुं वयं न क्षमाः । अतः कारणादस्या विवाहचिन्ता नान्यत्र कर्तव्या । अस्यामेव पुर्यां मंत्रिसुबुद्धिपुत्राय चैषा दातव्या"। इति स्त्रीणां वचो निशम्य नृपो हृदि दध्यौ—'नूनं विवाहादिकार्ये पुरन्ध्रीणामेव प्राधान्यम्' इति विचिन्त्य भूपेन सुबुद्धिनामा सचिवः समाहूतः । बहुमानपूर्वकमिति भाषितः—"भो मंत्रिन्! मया मत्सुता त्वत्सूनवे दत्ता, विवाहोत्सवः क्रियते"। इत्युक्ते मंत्रिणोक्तम्—"स्वामिन्नयुक्तं किं वदसि? त्वत्पुत्री कस्मैचिद्राजसूनवे घटते, न तु मम पुत्राय । यदुक्तम्—

ययोरेव समं वित्तं, ययोरेव समं कुलम् ॥
तयोर्मैत्री विवाहश्च, न तु पुष्टविपुष्टयोः ॥ १ ॥"

इति मंत्रिवचः श्रुत्वा राजा पुनरप्याह—"इत्यर्थे मंत्रिन्! त्वया न किमपि वाच्यम् । एतत्कार्यमित्थमेव भविष्यति । संशयो न विधेयः"। पार्श्वस्थैरप्युक्तम्—'हे मंत्रिन्नृपवाक्यं तथेति क्रियते'। तदा मंत्री नृपवचोऽनिष्टमप्यनुमेने । ततो मंत्री गृहं ग-

त्वा कृतावसक्थिक[1] उपविष्टः। चिरं चिन्तयितुं लग्नः—"हा! व्याघ्रदुस्तटीपतितोऽस्मि, किं करोमि? राज्ञः पुत्री रूपेण सुरांगनासमास्ति। मत्पुत्रः स कुष्टरोगाभिभूतः। तयोर्योगं जानन् कथं करोमि?" इति चिन्तातुरतया तस्य सर्वमपि भोजनादि विस्मृतम्। एवं चिन्तयतो बुद्धिरुत्पन्ना—"मदीया कुलदेवी शुभप्रभावास्ति[2]। तदाराधनं करोमि। तत्प्रसादात्सर्वं समीहितं भविता"। इति ध्यात्वा मंत्री विधिना कुलदेवतामाराधयत्। ततः सा प्रत्यक्षीभूय जजल्प—"मंत्रिन्! किमर्थमहं ध्यातास्मि?" मंत्र्यूचे—"मातस्त्वं स्वयमेव सर्वं वेत्सि। पुनस्तथापि मम कथयतः शृणु—मत्पुत्रो दुष्टेन कुष्टव्याधिना पराभूतोऽस्ति। तथा कुरु, यथा स नीरोगतां भजते"। इत्युक्ते देवी प्राह—"पुराकृतकर्मयोगाद्या व्याधिवेदना जाता, सा मयाप्यपाकर्तुं न शक्यते। तवैषा प्रार्थना वृथा"। इत्युक्ते पुनरपि मंत्री विमृश्य बभाषे—"यद्येवं न स्यात्तर्हि किमप्यन्यं पुरुषं तदाकारं निरामयं कुतोऽप्यानीय मम समर्पय, यथाहं नृपपुत्रीं तेनोद्वाह्य स्वपुत्राय ददामि। तस्य[3] यथोचितं करिष्ये"। इत्युक्ते देवी प्राह—"हे मंत्रिन्! पुरीद्वारे तुरंगमरक्षकनरसमीपे शीतनिवारणार्थमग्निसेवातत्परो यः 'कश्चिद्बालको मया कुतोऽप्यानीय मुक्तो भवति, स भवता ग्राह्यः। पश्चाद्यथोचितं कर्तव्यम्"। इत्याख्याय देवी तिरोदधे[5]। तेन वाक्येन सचिवो हृष्टःसन् सर्वविवाहसामग्रीं कर्तुं लग्नः। तदनन्तरं मंत्रिणा स्वतुरंगमरक्षकनरं प्रच्छन्नतया समाहूय तस्मै सर्ववृत्तान्तं निवेद्य सादरमावेदितम्। इदमूचे—"यः कोऽपि बालकः कुतोऽपि भवदन्तिके समभ्येति, स त्वया शीघ्रं समानीय ममार्पणीयः"। इत्युक्ते तेनाश्वरक्षकेणांगीकृतम्॥

इतश्च देवता ज्ञानेन तस्या राजपुत्र्यास्तं श्रेष्ठिसुतं भाविनं वरं विज्ञायोज्जयिन्यां महापुर्यां ययौ। तत्र गत्वा यथा स

१ जानुकटिपर्यन्तवद्धवस्त्र  २ सप्रभावास्ति.  ३ तस्या  ४ बालरूपो  ५ अदृश्या बभूव.

मंगलकुंभः पुष्पाण्यानयन् शृणोति, तथा व्योमस्थैवमुवाच—“ य एष बालकः पुष्पाण्यादाय याति, स नाटकेन राजकन्यां परिणेष्यति ”। इति श्रुत्वा स बालो विस्मयमापन्नः किमेतदिति चिन्तयन् मनसि दध्यौ—‘ गृहं गतस्तातस्य कथयिष्ये ’। यावता गृहे गतस्तावता विस्मृतम्। द्वितीयवासरेऽप्येवमेव श्रुतं, तदा मनसि व्यचिन्तयत्—“ अहो या वाणी कल्ये श्रुता, अद्यैव सा वाणी नभसि श्रूयमाणास्ति । गतदिने पितुर्न कथितं, परं त्वत्र कथयिष्यामि ”। इति विचिन्तयन् यावद्गच्छन्नस्ति, तावता महावात्यया समुत्पाट्य स बालश्चंपापुरीसमीपगे दूरतरारण्ये नीतः। तदा स भयभ्रान्तस्तृषाक्रान्तः श्रान्तो मानससरःसमानमेकं सरोवरं दृष्ट्वा तत्र वस्त्रपूतं जलं पीत्वा स्वस्थीभूय दर्भतृणै रज्जुं विधाय तया रज्ज्वा तदीयसेतुस्कन्धसमारूढं वटवृक्षमारुरोह। एतावता भानुरस्तमितः। ततो वटमारुह्य दिशो विलोकयति स्म। तदा उत्तराशायां समीपे एव ज्वलितानलं ददर्श। ततो वटात्समुत्तीर्य स भीतः शीतपीडितः सन् ज्वलनानुसारेण चंपापुरीबहिःप्रदेशे ययौ। तत्रागत्याश्वपालनरसमीपे वह्निसेवां कर्तुं लग्नः। तदा तैरश्वरक्षकैः पुरुषैर्हस्यमानैरित्युक्तम्—‘ कोऽयं वराको बालकः ? कुतः समागतः ’। इति परस्परं वार्ता कुर्वत्सु तुरगारक्षकस्वामिना श्रुतम्। तदा तेन पूर्वसंकेतं स्मरता बालः स्वसमीपे समानीतः निरुपद्रवः कृतः। ततश्च प्रातःसमयेऽतियत्नेन सचिवसमीपं गापितः। तदाऽमात्यो मुमुदे। स भव्यस्थाने स्थापितः, स्नानभोजनादिना सन्तोषितः। तदा मंगलकुंभेन चिन्तितम्—‘ ममायं सत्क्रियां कथं कुरुते ? तथा गोपयित्वा कथ रक्षितोऽहम् ? ’ इति विमृश्य सचिवपार्श्वे पृष्टम्—“ मम वैदेशिकस्य किमर्थमयं सत्कारः ? तथा कैषा पुरी ? को वा देशः। को वात्र भूपतिः ? इत्यादि सत्यं प्रोच्यताम्। मम विस्मयोऽस्ति ”। इति श्रुत्वाऽमात्योऽवादीत्—“ इयं चंपा पुरी। अङ्गाभिधो देशः। सुरसुन्दरोऽत्र राजा। अस्याहं मान्यः सुबुद्धिनामा मंत्री। मया त्वं महता कारणेन समानीतोऽसि”। तदा तेन पृष्टम्—“किं कारणं ?”

अथ सुबुद्धिः प्राह—भोः शृणु, राज्ञा त्रैलोक्यसुन्दरी पुत्री विवाहयितुं मत्पुत्राय दत्ता। पुनः स कुष्ठाभिभूतोऽस्ति। अंतः कारणाद्धे भद्र! त्वया सा परिणीय मत्सुताय दातव्या इत्यर्थे त्वमानीतः"। तद्वचो निशम्य मङ्गलः प्रोवाच—"भो मंत्रिन्! एतावन्मात्रमकृत्यं किं करोषि? सा रूपवती बाला क्व? तव कुष्ठी सुतः क्व? अहमेतावन्निष्ठुरं कर्म न करिष्यामि। मुग्धं जनं कूपे क्षिप्त्वा वरत्राकर्तनं कः कुरुते?"। तदा मंत्री प्राह—"रे दुष्ट! यद्येवं[1] कर्म न करिष्यसि, तदाहं त्वां निजहस्तेन मारयिष्यामि"। सुबुद्धिमंत्रिणा खड्गमाकृष्य निस्त्रिंशं हक्कितोऽपि स कुलीनशिरोमणिरकृत्यं नानुमेने। तदा प्रधानपुरुषैर्मंत्री तद्वधान्निषिद्धः, तस्य मंगलस्याप्युक्तम्—"भो भद्र! त्वं मंत्रिवचो मन्यस्व। विचक्षणैः प्रस्तावसदृशं क्रियते"। इति श्रुत्वा तेनापि मनसि चिन्तितम्—"एवमेव नूनं भाव्यमस्ति। अन्यथा ममोज्जयिनीत इहागमनं कथं स्यात्?। व्योमवाण्यापि पुरा इत्यमुक्तम्। तस्मादहमप्येनं करोमि। यद्भाव्यं तद्भवत्येव"। इति विचिन्त्य मंगलः पुनरेवं स्माह सचिवं प्रति—"इदं यदि निर्घृणं कर्म कृतमेव विलोक्यते, तदाहमपि भवत्पार्श्वे किमपि प्रार्थयामि"। इत्युक्ते सचिवः सानुकूलो बभाषे—'भो भद्र! कथय'। तेनोक्तम्—"यद्वस्तु राजा मे प्रयच्छति तत्सर्वं मामकीनमेव, तत्क्षणमेवोज्जयिन्याः पथि कर्तव्यम्"। एतद्वाक्यं मंत्रिणानुमेने। ततो निकटस्थे लग्ने हस्तिनमारोप्य वस्त्रालंकारविभूषितः स नृपसमीपे निन्ये। तदा राजा प्रमुदितः। त्रैलोक्यसुन्दरी तं मन्मथोपमं वरं दृष्ट्वा तद्वरप्राप्त्या स्वं कृतार्थं मेने। ततश्च लग्नसमये विप्रेण पुण्याहं पुण्याहमिति जल्पता वह्निपरितश्चतुर्वारं दम्पती भ्रामितौ। चत्वारि मंगलानि प्रवर्तितानि। प्रथमे मंगले राजा वराय भूयांसि चारुवस्त्राणि प्रादात्। द्वितीये मंगले वस्त्राभरणान्यदात्। तृतीये मंगले मणिस्वर्णादि ददौ।

१ यदीदं.

चतुर्थे मंगले रथादिकं दत्तवान्। तयोर्दम्पत्योरित्थं विवाहोत्सवः संजज्ञे। विवाहोत्सवे संजाते यदा जामाता वधूहस्तं न मुञ्चति, तदा राज्ञोक्तं—'वत्स! तव किं यच्छामि?' इत्युक्ते तेन जात्यघोटकपञ्चकं ययाचे। तदा नरेन्द्रः हर्षभरनिर्भरांगतया तत्क्षणमेव याचितान् पञ्चाश्वान् तस्मै जामात्रे ददौ। ततस्तूर्यैर्वाद्यमानैः सुन्दरीधवलोच्चारैर्वेदिध्वन्दरवैर्जायमानैः सवधूकः स मंगलः सचिवेन यदा स्वगृहे निन्ये, तदा निशायां मंत्रिगृहजनैश्छन्नं छन्नमेवं जजल्पे—'केनाप्युपायेन शीघ्रमेवायं निष्कास्यते'। तथा सा त्रैलोक्यसुन्दरी चेष्टिताकारैर्भर्तारं चलचित्तं ज्ञात्वा तस्योपान्तं न मुमोच। ततः क्षणान्तरेण स देहचिन्तार्थमुत्थितः। तदनु सा राजसुता जलपात्रं गृहीत्वा पृष्ठत एव ययौ। तदा स पयसा पवित्रीभूय गृहमध्ये समेतः। परंतु सचिन्तोऽस्ति। तस्मिन्नेवावसरे तया त्रैलोक्यसुन्दर्या रहःस्थितं स्वपतिं शून्यचित्तं दृष्ट्वा इत्थं बभाषे—'हे प्राणेश! किं भवतां क्षुधा बाधते?'। ओमिति तेन भणितम्। सा दासीहस्तेन पितृगेहान्मोदकानानाय्य तस्मै ददौ। तेषु मोदकेषु भुक्तेषु पानीयं पिबता तेनेति प्रोक्तम्—"अहो, ईदृशेषु सिंहकेसरमोदकेष्वास्वादितेषु यद्युज्जयिन्या नगर्या नीरं लभ्यते, तर्हि भव्या तृप्तिः स्यात्। न चान्यथा"। तद्वाक्यं श्रुत्वा व्याकुलमानसा राजपुत्री दध्यौ—"अहो, अघटमानं किं जल्पति? अयमुज्जयिनीजलमिष्टत्वं कथं जानाति? अथवा त्वस्य मातृकुलं तत्र भविष्यति। तेन दृष्टपूर्वतया तत्स्वरूपं जानन् भविष्यति। ततश्च तया निजहस्तेन पञ्चसौगन्धिकं तांबूलं स्वभर्त्रे मुखपाटवकरणाय ददे। ततः क्षणान्तरेण मंत्रिणा मानुषं प्रेष्य प्रस्तावो ज्ञापितः। तदा तेन मंगलेनोक्तम्—"प्रिये! पुनरप्यहं देहचिन्तार्थं गन्तुकामोऽस्मि, उदरार्तिरसदृशी विद्यते। त्वया जलपात्रं शीघ्रं नानेतव्यम्। क्षणमेकं प्रतीक्ष्य समागन्तव्यम्"। इत्युदित्वा मंत्रिमन्दिरान्निर्ययौ। तदा तेन मंत्रिसमीपे पृष्टम्—'मामकीनं राजदत्तं तुरगादिवस्तु क्वास्ति?'। तेनोक्तम्—'तत्सर्वमुज्जयिन्याः पथि संस्थितमास्ते'। ततस्तत्र गत्वा

सारतरं वस्त्वेकस्मिन् रथे निक्षिप्य तस्मिन् रथे चतुरोऽश्वान् योजयित्वा पृष्ठतश्चैकं बध्वा शेषकं कियद्वस्तु तत्रैव मुक्त्वा स प्रचलितः। अनेनोज्जयिनीपथिस्थिता ग्रामाः पृष्टास्तदा मंत्रिभृत्यैर्नामग्राहं सर्वेऽपि मार्गग्रामाः कथिताः। ततः स मंगलकुंभो रथाधिरूढस्तेन मार्गेण प्रचलन् स्तोकैरेव दिनैः स्वां नगरीं प्राप्तः ॥

इतश्च तत्पितरौ सर्वत्रापि तं विलोक्य बहुधा विलप्य कियद्भिर्वासरैर्विगतशोकौ जातौ स्तः। [1]एकदा मंगलस्य जननी गृहाभिमुखमायान्तं रथारूढं तं निरीक्ष्यानुपलक्ष्य च ससंभ्रमं चैवमुवाच—"भो राजपुत्र! त्वया गृहमध्ये रथः कथं प्रेर्यते? पुरातनं मार्गं त्यक्त्वा किं नवीनं मार्गं करोषि?" इत्थं निवार्यमाणोऽपि यावत्स न तिष्ठति, तावता श्रेष्ठिन्या समाहूयाकुलचेतसा श्रेष्ठिने समाचख्ये। तदा श्रेष्ठ्यपि तन्निषेधार्थं गृहाद्यावन्निःसरति, तावत्स मंगलकुंभो रथात् समुत्तीर्य पितुश्चरणौ ननाम। ततस्ताभ्यामुपलक्ष्य सहर्षं यथा भवति तथा स मंगलतनयो गाढतरमालिंगितः। हर्षाश्रूणि मुञ्चन्तौ समग्रं कुशलादिगमनागमनवृत्तान्तं पप्रच्छतुः। तथा ऋद्धिप्राप्त्यादिका वार्ता पृष्टा। तदा तेन स्वकीयसमाचारः समग्रोऽपि पित्रोरग्रे प्रोक्तः। तदा पितृभ्यां चित्ते इति चिन्तितम्—'अहो! पुत्रस्य महद्भाग्यं सौभाग्यम् च'। ततः स श्रेष्ठी स्वगेहं प्राकारगुप्तमकारयत्। तत्राश्वपञ्चकं सुगुप्तस्थाने तिष्ठति। श्रेष्ठिगृहे वर्धापनाद्युत्सवा जाताः। अथान्यदा स मंगलकलशः पितरं प्राह—'तात! ममाद्यापि कलाभ्यासः कर्तव्योऽस्ति'। इत्युक्ते जनकेन स्वसदनान्तिके कलाचार्यसमीपे विद्याभ्यासाय स मुक्तः तत्र कलाभ्यासं कुरुते ॥

इतश्च तेन मंत्रिणा रात्रौ मंगलवेषधारी वासवेश्मनि वधूपान्ते स्वसुतः प्रेषितः। तदा त्रैलोक्यसुन्दरी तं शय्याधिरूढं

---

१ एतावता.

दृष्ट्वा हृदि दध्यौ—'कोऽयं कुष्ठाभिभूतो ममान्तिके समेतः ? '। अथ स यावत्करस्पर्शं कर्तुमुद्यतो भवति, तावत्सा सुन्दरी शयनात्समुत्तीर्य झटित्येव गेहाद्बहिस्तत्र ययौ, यत्र दासीवर्गः सुप्तोऽस्ति। तदा दासीभिरुक्तम्—'स्वामिनि ! कथं ससंभ्रमाऽसि ? '। इत्युक्ते साऽवादीत्—'स देवतारूपी मत्पतिः क्वापि गतः'। ताः प्रोचुः—'इदानीं स त्वत्पतिर्गृहमध्ये प्रविष्टः'। तदा तया प्रोचे—'स मत्पतिर्न समेतः। कोऽपि कुष्ठी समेतोऽस्ति'। ततः सा दासीमध्ये सुप्ता। तां रात्रिं व्यतिक्रम्य त्रैलोक्यसुन्दरी प्रातः स्वपितृगृहं ययौ। ततः प्रभातसमये सुबुद्धिसचिवः कुबुद्धिप्रेरितो महीपतेः सकाशं गत्वा चिन्ताश्याममुखस्तस्थौ। तदा भूपतिना पृष्टम्—'मंत्रिन् ! किं हर्षस्थाने विषादः ? '। मंत्रिणोक्तम्—'राजन् ! मम कर्मदोषेण हर्षस्थाने विषाद एव समजनिष्ट'। तदा स जगाद—"यतः—चिन्तयत्यन्यथा जीवो, हर्षपूरितमानसः। विधिस्त्वेष महावैरी, कुरुते कार्यमन्यथा ॥ १ ॥" पुनरपि भूपो दुःखकारणं पप्रच्छ। तदा स सचिवो दीर्घं निःश्वस्य बभाषे—"अहं दैवेन मुषितः। मम पुत्रो यादृशोऽभूत्तादृशो नरेन्द्रेणापि दृष्टः। स च सांप्रतं त्वत्सुतासंपर्केण कुष्ठी जातः। किं कथ्यते ? कस्याग्रे पूत्क्रियते ? "। इत्युक्ते राज्ञा पृष्टम्—'किं जातम् ? '। तदा स सचिवो दीर्घं... 

राजापि दुःखभाग् बभूव, इत्थं मनसि चिन्तयति स्म—"नूनं सा मम नन्दिनी [1]निर्लक्षणास्ति। तदंगप्रभावेणैव मंत्रितनयः कुष्ठी जातः। जगति सर्वे जन्तवः स्वस्वकर्मफलभोक्तारः, परं त्वन्यो निमित्तमात्रं स्यात्—सुखदुःखानां कर्ता हर्ता न कोऽपि कस्यचित्पुंसः। इति चिन्तय सद्बुद्ध्या पुराकृतं भुज्यते कर्म ॥ १ ॥" इति विमृश्य राज्ञोक्तम्—"हे मंत्रिन् ! अहमेव तव [2]पुत्राय चानर्थं कृतवान्। यद्यहं मत्पुत्रीविवाहं नाकरिष्यत्तर्हि त्वत्पुत्रः कुष्ठाभिभूतः कथमभविष्यत् ? "। इत्युक्तेऽमात्योऽब्रवीत्—"स्वामिन् ! हितकार्ये

1 निर्भाग्यास्ति  2 पुत्रायानर्थं.

कुर्वतां भवतां को दोषः ? मत्कर्मणामेव दोषोऽयम् ” । अथ मंत्री समुत्थाय स्वस्थानमगात् । सा त्रैलोक्यसुन्दरी राज्ञः परिजनस्य च प्रियाप्यप्रिया जाता । न कोऽपि तामाललाप । न कोऽपि तां [1]दृष्ट्याप्यालोकयति स्म । मातृगृहपृष्ठत एकत्र गुप्तगेहे साऽस्थात् । इति चिन्तयति—“ मया पूर्वं किं दुष्कर्म विदधे ? येन दुष्कर्मणा मम परिणतपतिः कापि नंष्ट्वा गतः । अन्यच्च लोकमध्ये महान् कलंक उपस्थितः । अथाहं किं करोमि ? क्व गच्छामि ? कस्याग्रे कथयामि ? महति व्यसने पतितास्मि ” । इति चिन्तयन्त्यास्तस्याश्चित्ते समुत्पन्नम्—“ नूनं मे परिणीतः पतिरुज्जयिन्यां गतो भविष्यति । तेन तदा मोदकान् भक्षयित्वा इत्यालापितं—‘ एते मोदकास्तर्हि भव्या यद्यवन्तिजलमुपरि स्यात् ’ इत्यभिज्ञानेन स मत्पतिस्तत्र संभाव्यते । केनाप्युपायेन यद्यहं तत्र गच्छामि, तर्हि तं प्रकटीकृत्य सुखभागिनी भवामि ” । एवं चिन्तयन्ती स्थितास्ति । अथान्येद्युः सा जननीं प्रति प्राह—‘ हे मातः ! तथा कुरु, यथा मत्पिता वारमेकं मम वाक्यं शृणोति ’ । इत्युक्तेऽपि तां मन्दादरां दृष्ट्वा अन्यदा सा सुन्दरी सिंहनामकं सामन्तं प्रति स्वमर्थं विज्ञापयामास । तदा तेन सामन्तेन साद्यन्तं तं समाचारं श्रुत्वा हृदये विचार्य तस्या एव मुक्तम्—‘ वत्से ! अधृतिर्न विधेया । प्रस्तावे नृपं विज्ञाप्य ते समीहितं करिष्ये ’ । इति वचसा नृपांगजा तुष्टा । तेन प्रस्तावं लब्ध्वा भव्ययुक्त्या राजानं विज्ञाप्येत्युक्तम्—“ हे नृपते ! भवन्न-न्दिनी वराकिका बालिका महति कष्टे पतितास्ति । अस्याः सन्मानदानं दूरे तिष्ठतु । वाक्यश्रवणमात्रेण प्रसादोऽस्य विधीयताम् ” । पार्थिवोऽप्यश्रुपूर्णाक्षः सिंहसामन्तं प्रत्युवाच—‘भो सामन्त ! अनया मत्सुतया पूर्वभवे किञ्चिदभ्याख्यानादि दुष्कृतं कृतं, तत्प्रभावादियं सकलंका जाता, अस्माकमप्यनिष्टाऽभूत् । पुनस्तथाप्यसौ यत्किञ्चित्कथयितुमिच्छति, तन्ममाग्रे कथयतु” । इत्युक्ते त्रैलोक्यसुन्दरीं प्रति

[1] दृष्ट्वा.

सिंहसामन्तेनोक्तम्—'वत्से ! स्वामिनोऽग्रे स्वचिन्तितं वचनं वद'। ततः सा त्रैलोक्यसुन्दरी तत्र नृपसमीपमागत्य वचनमिति प्रोवाच—'तात ! मम कुमारोचितं वेषं देहि'। इति श्रुत्वा राजा प्राह—'भो सामन्त ! वराकीयं किमसंबन्द्धं वचो वक्ति ?'। तदा स सामन्तोऽवदत्—"राजन्ननया युक्तमुक्तम्। पुराप्ययं क्रमोऽस्ति। यतो राजसुता गुरुकार्यविशेषेण पुंवेषं दधते। इत्यर्थे न किमप्ययुक्तम्। संशयो न कार्यः। पुंवेषो दीयताम्"। अथ नृपः सिंहसामन्तोक्तमिति वचो युक्तियुक्तं मत्वा तस्यै पुंवेषं ददौ। तथा च तद्रक्षार्थं सैन्यान्वितं सिंहं चादिदेश। पुनः सुन्दरी प्राह—"यदि तातादेशो भवेत्तर्हि महता कारणेनोज्जयिनीं यामि। समीहिते जाते तत्कारणं कथयिष्ये"। इत्युक्ते राजा प्राह—"पुत्रि यथा स्ववंशस्य दूषणं न स्यात्तथा कर्तव्यम्"। इत्युदित्वा महीभुजा सा विसृष्टा। ततश्च सिंहसामन्तादिभूरिसैन्यसमन्विता सा सुन्दरी पुरुषवेषधारिणी पितुरादेशं प्राप्याखण्डितप्रयाणैरुज्जयिनीं ययौ। तदाऽवन्तीशो राजा वैरिसिंहः प्रजामुखादेवं शुश्राव—'यतश्चंपापुर्या नृपांगजः समागच्छन्नस्ति'। तदा परस्परप्रीत्या तस्या नृवेषधारिण्या अभिमुखयानादिसन्मानादिना स्वागतप्रश्नपूर्वकं पुरीं प्रवेश्य स्वसदने राज्ञा समानीता। आगमनकार्यं पृष्टं। तदा तयोक्तम्—"आश्चर्यपूरितां भुवि ख्यातां कुतूहलादिमां नगरीं विलोकयितुं समेतोऽस्मि"। ततो नरेन्द्रेण बभाषे—"भो राजपुत्र ! त्वया मम गेह एव स्थातव्यम्। सुरसुन्दरराजस्य मम गेहस्य च नान्तरं चिन्त्यम्"। इत्युक्ते सा नृपसुता सबलवाहना राजढौकितगेहे तस्थौ। तत्र स्थित्वा सा स्वपदातीन् स्वादिष्टजलाश्रयनिरीक्षणाय समादिदेश। तदा तैर्विज्ञोस्य प्रोक्तम्—"पूर्वस्यां दिशि तन्नीरस्थानमस्ति"। इत्युदिते सा सुन्दरी नृपाज्ञया तन्मार्गविहितावासेऽवसत्। अन्यदा सा तत्रस्था नीरपानार्थं गच्छतोऽश्वान्निरीक्ष्य हृदि दध्यौ—'नूनमेते मम तातस्य तुरंगमाः'। इति निश्चित्य तेषामनुपदं स्वभृत्याः प्रस्थापिताः। तेषामित्युक्तम्—"यत्रेमेऽश्वा

यान्ति, यत्र तिष्ठन्ति, तत्र भवद्भिर्गत्वा तदीयधामनामादि ज्ञात्वा समागन्तव्यम् ”। इत्युक्ते तैर्भृत्यैः सर्वं स्थानाभिधानादि विज्ञाय प्रोक्तम्। तथा मंगलकलशं कलाभ्यासपरं ज्ञात्वा त्रैलोक्यसुन्दरी सिंहसामन्तं प्रत्युवाच—‘ केनाप्युपायेन तुरंगमा आत्मीया गृह्यन्ते’। इत्युक्ते सिंहेनोक्तम्—‘ आसन्नलेखशालायाः सच्छात्रोऽध्यापको भोजनाय निमंत्र्यताम् ’। तथेत्युक्ते भोजनादिसामग्रीं विधाय स निमंत्रितः। प्रस्तावे समेतः। तत्सार्थे स्वपतिं दृष्ट्वा सा मनसि मुमुदे। तदा प्रमोदादात्मीयमासनं स्थालं ( च ) मंगलाय दत्वा विशेषगौरवमकरोत्। सादरं भोजनं दत्वा सर्वेभ्यो वस्त्राण्यदात्। मंगलाय स्वांगलग्नं रम्यं वासोयुग्मं ददौ। ततः कलाचार्यमित्याह—‘ एतेषां मध्याद्यो जानाति, स छात्रो ममाग्रे कथां कथयतु ’। इति निर्दिष्टे सर्वैरपि छात्रैर्मंगलकलशस्य विशेषभक्तिं दृष्ट्वा कोपादिति जल्पितम्—‘ एतेषां मध्ये कथां मंगल एव कथयिष्यति ’। सर्वच्छात्रानुज्ञया पण्डितेन मंगलकलशस्यैवादेशो दत्तः। तदा स पण्डितगिरा वक्तुमेवं प्रचक्रमे—‘ भोः कथानकं कल्पितं वाऽनुभूतं कथयामि ? ’। इत्युक्ते कुमारवेषधारिण्या नृपपुत्र्या बभाषे—‘ कल्पितेन पर्याप्तमनुभूतमेव त्वरितं ब्रूहि ’। इति भाषिते मंगलश्चिन्तयामास—“ सैषा त्रैलोक्यसुन्दरी भवति, या मया चंपापुर्यां भाटकेन कन्या परिणीताभूत्। केनापि हेतुना नृवेषं धृत्वा समेतास्ति ”। इति विमृश्य निजं स्वरूपं कथयितुं क्षमः सादिमध्यावसानं निजं चरित्रं तावत्कथितं यावत्सुबुद्धिमंत्रिणा स्वगृहान्निर्वासितः। अत्रान्तरे राजसुता कृत्रिमं कोपं विधाय प्राह—‘ भो भो अमुं मिथ्याभाषिणं गृह्णीत गृह्णीत ’। इत्युक्ते तस्याः। पत्तयस्तद्ग्रहणार्थं समुद्यतास्ते च तयैव वारिताः। परंतु स च गृहमध्ये समानीतः। अथैनमासन उपवेश्य नृपात्मजा सिंहसामन्तं प्रत्यूचे—‘ अहं येन परिणीतास्मि, स चायं मम प्रियो ज्ञेयः। अथात्र किं कर्तुं युज्यते ? ’। इत्युक्ते स प्रोक्तवान्—‘अयं चेत्तव भर्ता स्यात्तर्हि त्वयाश्रयणीयः ’ इत्युक्ते सा प्राह—‘ भोः सामन्त चेत्तव चित्ते संशयो भवति,

तत्रैतद्गृहे गत्वा स्थालादीन्यालोकय'। इति व्यक्ते प्रोक्ते सामन्तः संशयं त्यक्त्वा श्रेष्ठिनं समाहूय वध्वाः स्वरूपं कथयित्वा राजपुत्रीसमीपे समेतः ततस्तस्यादेशेन सा स्त्रीवेषमुद्भूतं[1] कृत्वा तस्य मंगलस्य वल्लभा बभूव। ततस्तद्युग्मं श्रेष्ठिनः सदनं जगाम। पार्थिवोऽपि श्रेष्ठिनं समाहूय तं वृत्तान्तं पृष्ट्वा श्रुत्वा च मनसि विस्मयं दधौ। ततोऽनन्तरं तत्रैव सदने राजादेशेन मंगलः सभार्यः सुखं विललास। ततस्त्रैलोक्यसुन्दर्या सिंहसामन्तः ससैन्यः पश्चात्प्रेषितः। तदनन्तरं स पुरुषवेषं लात्वा चंपां ययौ। अमुना सिंहेन सर्ववृत्तान्ते कथिते राजा हृष्टो जजल्प—"अहो मत्पुत्र्याः कलाकौशलं विलोक्यताम्। अहो अमात्यस्य पापबुद्धिर्विलोक्यताम्। येन मंत्रिणा मत्पुत्री निर्दोषापि सदोषा कृता"। इति चित्ते विचिन्त्य पुनरपि राजा सिंहसामन्तमुज्जयिन्यां प्रेष्य निजपुत्रीं जामातृसहितां समानाय्य यथाविधि सत्चक्रे। ततो महीभुजाऽमात्यो विडंबितः। तदीयं सर्वस्वं गृहीतम्। वध्यस्थाने वधार्थं राज्ञा स प्रगुणीकृतः। तलारक्षै रासभे स आरोप्य त्रिकचतुष्कचत्वरादिषु परिभ्रामितः। ततो मंगलेन गाढाभ्यर्थनया [2]नृपाग्रहात्सचिवो मोचितः। तदा राज्ञोक्तम्—"रे पापचेष्टित! त्वं मया जामातुरुपरोधेन मुक्तोऽसि। अन्यथा न मुञ्चामि। अथ मत्पुरान्निःसर"। इत्युक्त्वा स्वपुरान्निष्कासितः। तदनन्तरं तेन नृपेण पुत्रविवर्जितेन स जामातैव पुत्रस्थाने स्थापितः। तन्मातापितरौ तत्रैव नृपतिना समानायितौ। अन्येद्युः स राजा मंत्रिसामन्ताद्यनुमतेन महोत्सवपुरःसरं स्वराज्ये तं मंगलकलशं स्थापयामास। ततश्च यशोभद्रसूरीणां चरणान्ते सुरसुन्दरनृपः संयममुपाददे।

राज्ये कोऽपि वणिग्जातिः संस्थापितोऽस्तीतीर्ष्यया प्रत्यन्तपार्थिवास्तस्य राज्यं गृहीतुमुपतस्थिरे। तदा तेन श्रीमत्पुण्य-

---

१ उद्भूत प्रकट २ नृपस्य तन्मारणरूपादाग्रहात्

प्रभावेण संग्रामभूमौ ते सर्वेऽपि लीलयैव जिताः । ततस्तस्य सर्वेऽपि शत्रवो मित्रत्वं प्राप्ताः । अथ सुखेन स राज्यं पालयति । ततस्त्रैलोक्यसुन्दर्याः पुत्रोऽभूत् । यशोशेखरस्तन्नाम । ततः स मंगलकुंभराजो निजदेशे जिनचैत्यजिनभुवनजिनार्चाऽमारियात्रादिधर्मकर्म व्यधापयत् । अन्यदोद्यानदेशे समायातं श्रीजयसिंहसूरिं श्रुत्वा स भूपः सकलत्रः सद्भावनया वन्दनाय ययौ । तत्र गत्वा गुरुं त्रिः प्रदक्षिणीकृत्य भक्तिपूर्वं नत्वेति पप्रच्छ—"भगवन् केन कर्मणा मया विवाहकाले विडंबना प्राप्ता देव्या (च) दूषणं कथं प्राप्तम् ?" । इत्युक्ते सूरिरूचे—"अत्रैव भरतक्षेत्रे क्षितिप्रतिष्ठं नाम पत्तनमस्ति । तत्र सोमचन्द्राभिधानः कुलपुत्रकोऽभूत् । तद्भार्या श्रीदेवी । मिथस्तौ प्रीतिशालिनौ स्तः । यः सोमचन्द्रः स प्रकृत्या सुगुणः सरलाशयः समस्तलोकानां मान्यः । तद्भार्यापि तादृशी । इतस्तत्र नगरे जिनदेवाभिधः श्रावकोऽभूत् । तस्य सोमचन्द्रेण सह मैत्री निबिडा बभूव । एकदा सत्यपि धने जिनदेवो धनाकांक्षया देशान्तरं गन्तुकामः सोमचन्द्रं मित्रं प्रति बभाषे—'भो मित्र ! देशान्तरेऽहं धनहेतवे गमिष्यामि । परंतु त्वया मामकं धनं सप्तक्षेत्र्यां यथाविधि वाप्यम् । तत्रापि पुण्यपष्ठांशो भवतु' । इत्युक्त्वा दीनारसहस्रदशकं तस्यार्पयित्वा स देशान्तरे गतः । तस्मिन् प्रयाते सति सोमचन्द्रेण शुद्धचेतसा तदीयं धनं यथोचितस्थानेषु व्ययितम् । तेन सोमचन्द्रेण कियद्धनं स्वकीयमपि व्ययितम् । महत्पुण्यमुपार्जितम् । तद्भार्यापि तद्धनानुमोदनया पुण्यं भेजे । तथा तस्मिन्नेव पुरे तस्याः श्रीदेव्याः सखी भद्राभिधानाभवत् । सानन्दश्रेष्ठिपुत्री देवदत्तस्य गेहिनी । एवं सति कियता कालेन स देवदत्तः श्रेष्ठी कर्मदोषात् कुष्ठी जातः । ततस्तत्प्रिया भद्रा विषीदति स्म । एकदा तया श्रीदेव्याः सख्याः पुरत इत्थमुक्तम्—'केनापि कर्मणा मत्पतिः कुष्ठी जज्ञे' । तदा तया हास्येनोक्तम्—'हे सखि त्वदंगसंगत एव तव प्रियः कुष्ठी जातः । नूनं त्वं महापापकर्त्री मम दृष्टिमार्गाद्दूरतो गच्छ । मुखं मा दर्शय' । इत्युक्ते सा मनसि दूना क्षणं श्याममुखी त-

स्यौ । पुनरपि तया क्षणेनैवं प्रोचे—‘ सखि त्वया खेदो न कर्तव्यः । अहं त्वया सह हास्यं करोमि ’ । ततः सा प्रमुदिता । अथ सोमचन्द्रः स्वपत्न्या सार्धं साधुसंसर्गतः श्रीमद्धर्मं प्राप्य पालयामास । तदनन्तरं समाधिना मृत्वा तौ दंपती सौधर्मे पञ्चपल्यायुषौ त्रिदशौ जातौ । ततः सोमचन्द्रात्मा सौधर्माच्च्युत्वा हे नृपाल ! भवान् जातः । तथा श्रीदेव्या जीवस्ततश्च्युत्वा त्रैलोक्यसुन्दरी जज्ञे । भो राजन् ! यद्भवता सोमचन्द्रभवे परद्रव्येण पुण्यमुपार्जितं तत्प्रभावाद्भाटकेन राजसुता परिणीता । तया च तया त्रैलोक्यसुन्दर्या पुरा श्रीदेवीभवे हास्येनैव वयस्यायै यः कलंको दत्तः, तदनुसारत एतयापि दूषणं प्राप्तम् ” । इत्युक्ते तौ राजा राज्ञी पूर्ववृत्तान्तं श्रुत्वा स्वसूनवे राज्यं दत्वा वैराग्येण गुरोः समीपे प्रव्रज्यां जगृहतुः । ततः स राजर्षिः क्रमेण सर्वसिद्धान्तपारगः सन् गुरुणा श्रीसूरिपदे स्थापितः । त्रैलोक्यसुन्दरी साध्वी प्रवर्तिनीपदे स्थापिता । ततस्तौ शुभध्यानेन विपद्य ब्रह्मलोकं प्राप्तौ । ततश्च्युत्वा मनुजत्वं प्राप्य तृतीये भवे तौ द्वावपि मोक्षपदं प्रापतुः ॥

## ॥ इति मंगलकलशकथानकम् ॥

एतां धर्मकथां निशम्य श्रीषेणमहीपतिः प्रतिबुद्धः गुरोः पार्श्वे सम्यक्त्वं श्राद्धधर्मं च जग्राह । सूरिरन्यत्र विजहार । श्रीषेणनृपती राज्यं तं ( च ) जैनधर्मं यत्नतः पालयामास । तथा राज्ञ एवोपदेशेन साभिनन्दिता राज्ञी विशेषेण धर्मं भेजे । तथाऽपरा भद्रकत्वं प्राप्ता । इतश्चान्यदा कौशांबीस्वामिना बलभूपेन श्रीमतीकुक्षिसंभूता श्रीकान्ता पुत्री श्रीषेणसुतस्य इन्दुषेणस्य स्वयंवरा प्रेषिता । तदा तां रूपवतीं बालां दृष्ट्वा द्वावपि राजसुतौ परिणेतुकामौ परस्परं देवरमणोद्याने गाढं संनह्य युयुधाते । बहुभिर्निवारितावपि ॥

न विरतौ । ईदृशे समये स श्रीषेणनृपः स्वल्पकषायः स्वच्छमानसः श्रीजिनभक्तिभावितः प्रियवादी तौ द्वावपि पुत्रौ शत्रू इव वैरायमाणौ निरीक्ष्य निवारयितुमसमर्थः सन्नेवं विचिन्तयति स्म—“अहो विषयलांपट्यं, अहो कर्मणां वैचित्र्यं, अहो मोहविजृंभितं विलोक्यताम् । एतौ द्वावपि महाभागौ मम नन्दनौ भूत्वा एककामिनीकृते कलिं विदधतुः । अहमनयोर्दुश्चरित्रेण लज्जमानः सभासदां मुखं कथं दर्शयिष्यामि ? । अथ मम मरणमेव शरणम् । यतः—

वरं प्राणपरित्यागो, मा भूच्च मानखंडनम् ।
मृत्युश्च क्षणिकं दुःखं, मानभंगो दिने दिने ॥ १ ॥”

इत्यभिप्रायं देव्योः कथयित्वा ताभ्यां समं स श्रीषेणराजः पञ्चपरमेष्ठिनमस्कारं स्मरन् विषमिश्रकमलाघ्राणप्रयोगेण विपन्नः । तथा सत्यभामापि कपिलाद्विष्यती तेनैव विधिना मरणं प्राप्ता । जंबूद्वीपे विदेहमध्यवर्तिन्युत्तरकुरुक्षेत्रे ते चत्वारोऽपि जीवा युग्मिनोऽभवन् । श्रीषेणप्रथमप्रियाजीवावाद्यं मिथुनकं, सिंहनन्दितासत्यभामयोर्द्वितीयं मिथुनकम् । एवं सति कोऽपि चारणर्षिः कुतोऽप्येत्य तयोरिन्दुषेणबिन्दुषेणयोर्युध्यमानयोरित्थमवादीत्—“भो राजकुमारौ भवन्तौ द्वावपि कुलीनौ चरमदेहौ निष्ठुरमीदृशं कर्म कुर्वाणौ कथं न लज्जेते ? । इदं युष्मदीयं कुचेष्टितं दृष्ट्वा सभार्यो युवयोः पिता विषघ्राणप्रयोगेण मरणमवाप । युवयोर्मातृपित्रोरुपकारस्यानृणत्वं कथमपि न स्यात् । यतः—

अस्मिञ्जगति महत्यपि न किञ्चिदपि वस्तु वेधसा विहितम् ।

अतिशयवत्सलतायां भवति यतो मातुरुपकारः ॥ १ ॥

युवां कामिनीकृते तयोर्मातापित्रोर्मरणाय प्रवृत्तौ, तर्हि भवतां धिक्" । इति तद्वचसा तौ प्रतिबुद्धौ त्यक्तयुद्धौ जातौ । मुनिप्रवरं मुदा प्रशंसितुं लग्नौ—"त्वं गुरुः, त्वमेव पिता, त्वमेव बन्धुः । आवां त्वयैव दुर्गते रक्षितौ" । इत्युक्त्वा तं चारणर्षिं नत्वा तां राजकन्यां विसृज्य तौ द्वावपि नृपसुतौ निजगृहं गतौ । ततः पित्रादीनां प्रेतकार्यं चक्रतुः । ततोऽनन्तरं गोत्रिणे राज्यं दत्वा धर्मरुचिपार्श्वे नृणां सहस्रचतुष्टयेन सार्धं व्रतं जगृहतुः । ततस्तावुभावपि चिरं दीक्षां प्रतिपाल्य, विविधं तपः कृत्वा, केवलज्ञानं प्राप्य, मुक्तिपदं प्रापतुः ॥

इतश्च श्रीषेणमुख्या युगलद्वयी उत्तरकुरौ त्रिपल्यायुः प्रतिपाल्य ततश्च्युत्वा सौधर्मकल्पे पल्यत्रितयायुरासीत् ॥

॥ इति श्रीशान्तिनाथचरित्रे प्रथमभवे भवत्रितयवर्णनो नाम प्रथमः प्रस्तावः ॥

## ॥ अथ द्वितियः प्रस्तावः ॥

इतश्चात्रैव वेताढ्ये उत्तरश्रेणिभूषणं रथनूपुरचक्रवालाख्यं पुरमस्ति । तत्र ज्वलनजटी विद्याधरेन्द्रो राज्यं कुरुते स्म । तद्भार्या वायुवेगाभवत् । तत्कुक्षिसंभवोऽर्कस्वप्नसूचितोऽर्ककीर्तिनामा तस्य राज्ञः पुत्रोऽभूत् । स सुतः पित्रा यौवनं प्राप्तः सन् युवराजपदे स्थापितः । तदनन्तरं तत्कनिष्ठा चन्द्रलेखोत्तमस्वप्नसूचिता तयोः पुत्री बभूव । क्रमेण स्वयंप्रभानाम्ना वृद्धिमती जाता । अन्येद्युस्त-त्राभिनन्दनजगन्नन्दनौ मुनिपुंगवौ व्योमचारिणौ समेतौ । ततस्तदीयां धर्मदेशनां श्रुत्वा स्वयंप्रभा कन्या शुद्धसामाचारीसहिता श्राविका बभूव । ततोऽन्यत्र तौ मुनिवरौ विजहतुः । एकदा सा स्वयंप्रभा पर्वदिने पौषधव्रतं जग्राह । ततश्च सा कन्या शुद्धं पौषधं प्रतिपाल्य पारणकदिने प्रातर्गृहप्रतिमामभ्यर्च्य तदाशिषं (तच्छेषां) गृहीत्वा पितुः समर्पयामास । तदा भूपतिस्तामाशिषं मस्तके धृत्वा, पुत्रीं तथो-त्संगे संस्थाप्य, तद्रूपवयसी विलोक्य मनस्येवमचिन्तयत्—"इयं मम पुत्री वरयोग्या जाता अस्याः कोऽनुरूपो वरो भविष्यति ? यत उक्तम्—

कुलं च शीलं च सनाथता च, विद्या च वित्तं च वपुर्वयश्च ।
वरे गुणाः सप्त विलोकनीयाः, ततः परं भाग्यवशा हि कन्या ॥१॥"

इति विचिन्त्य कुमारीं प्रति बभाषे—'वत्से याहि ! पारणकं कुरु' । इत्युक्ते सा सुता स्वस्थानं गता । तदनन्तरं राजा मंत्रिण आकार्य स्वचिन्तितं कार्यं प्रोक्तवान् । तदा मंत्रिणो विमर्शनां कर्तुं लग्नाः । तेषु मंत्रिषु सुश्रुतनामा प्राह—'हे देव रत्नपुरे

मयूरग्रीवपुत्रस्त्रिखंडभोक्ताऽश्वग्रीवनामा खेचरेश्वरोऽस्ति, अस्याः पुत्र्याः स एव वर उचितः’। अथ बहुश्रुतोऽवदत्—‘एतदुक्तं मम न युक्तं प्रतिभाति। यतोऽयं वृद्धोऽस्ति। ततः कोऽप्यन्यो वरः कुलशीलवयोभिस्तुल्योऽस्याः करिष्यते’। ततो लब्धावसरेण सुमतिमंत्रिणा प्रोचे—“राजन्नुत्तरश्रेण्यां प्रभंकरा नाम पुरी विद्यते। तत्र मेघघनो राजा। तद्भार्या मेघमालिनी। तयोः पुत्रो विद्युत्प्रभः। पुत्री ज्योतिर्माला। यो विद्युत्प्रभः सोऽस्याः पुत्र्या वरो विधीयते। तथा ज्योतिर्मालार्ककीर्तिकुमारस्य पत्नी भवितुमर्हति”। ततोऽन्येन श्रुतसागरमंत्रिणा भणितम्—‘नूनमस्याः पुत्र्याः स्वयंवरः कर्तुमुचितः’। इत्युक्ते राजा सर्वेषां मंत्रिणां वचनानि हृदयेऽवधार्य तान् विससर्ज। अथान्यदा राजा संभिन्नश्रोतं नैमित्तकोत्तमं समाहूय स्वयंप्रभाया वरस्वरूपं पप्रच्छ। तदा नैमित्तिकोऽवदत्—“भो राजन् पोतनपुरे प्रजापतिराज्ञः पुत्रौ यौ त्रिपृष्ठाचलसंज्ञकौ स्तः। तावत्र भरते वासुदेवबलभद्रौ भविष्यतः। अमुं चाश्वग्रीवं प्रतिवासुदेवं हनिष्यति। नूनं मया साधुमुखादिति श्रुतं, स्वनिमित्तेनाप्येवं जानामि। तथा स त्रिपृष्ठस्तुभ्यं विद्याधरेशत्वं दास्यति। तथा चैषा स्वयंप्रभा तस्य पट्टराज्ञी भविष्यति”। इत्युक्ते स राजा नैमित्तिकं प्रति तुष्टः। महतीं पूजां विधाय स विसृष्टः। अथ ज्वलनजटी विद्याभृत् पोतनपुरे मारीचिं दूतं प्रेषयामास। स दूतस्तत्र गत्वा नत्वा च तं प्रजापतिनृपमित्युवाच—“यदस्मत्स्वामी ज्वलनाभिधः स्वयंप्रभां पुत्रीं त्वत्सूनवे त्रिपृष्ठाय दातुमिच्छति। तेनाहं तवान्तिके प्रेषितोऽस्मि”। तेनेत्युक्ते प्रजापतिना राज्ञा भणितम्—‘एतत्कार्यमस्माकमप्यभीष्टम्। इत्युक्त्वा दूतः सत्कृतः। पश्चात्तेन दूतेन चलित्वा स्वप्रभुजे सर्वं समाख्यातम्॥

इतश्च प्रतिविष्णुनाऽश्वग्रीवभूपेन दृष्टप्रत्ययोऽश्वबिन्दुनामा नैमित्तिक इति पृष्टः—‘भो निमित्तज्ञ मम कुतो मृत्युर्भविष्यति?’ इत्युक्ते स निमित्तवित्प्राह—“राजन् यस्तव चंडवेगाभिधं दूतं धर्षयिष्यति, तथा शालिक्षेत्रविनाशकं सिंहं यो हनिष्यति,

स त्वद्विनाशकृज्ज्ञेयः " । इति निशम्य नृपतिस्तं सत्कृत्य विसृष्टवान् । एतावता तेन प्रतिवासुदेवेन प्रजापतिराजपुत्रौ जनमुखादतिविकटौ श्रुतौ । अथ तेन प्रतिविष्णुना प्रजापतिनृपास्थाने स्वकीयो दूतश्चण्डवेगनामा प्रेषितः । तदा स दूतः प्रेक्षणोत्सवे जायमाने तस्य प्रजापतिनृपतेः संसदि गतः । तदा सर्वोऽपि सभास्थितो जनो व्यग्रतां प्राप्तः । एतस्मिन्नवसरे नाटके रंगभंगं दृष्ट्वा त्रिपृष्ठाचलनामानौ कुमारौ तस्मै दूताय भृशं कुपितौ । परंतु कोपं संवृत्य मनसि ज्ञात्वा स्थितौ स्तः । एतावता प्रजापतिनृपेन स प्रतिविष्णुदूतः सत्कृतः पश्चाच्चलितः । कुमारभृत्यैस्ततस्तयोः कुमारयोरग्रे कथितम्—' स दूतो राज्ञा सत्कृत्य संप्रति प्रस्थापितः ' । इति श्रुत्वा ताभ्यां पृष्ठे गत्वा रंगभंगापराधं स्मरद्भ्यां मुष्टिपाणिप्रहारैर्वारंवारं स भृशं ताडितः । तदा प्रजापती राजा तत्पुत्रयोः कुचेष्टितं श्रुत्वा, शीघ्रमेव तत्रागत्य, तं दूतं क्षमयामास । भूयोऽप्यशनवसनादिना संतोषितवान् । यत उक्तम्—

**को न याति वशं लोके मुखे पिण्डेन पूरितः । मृदंगो मुखलेपेन करोति मधुरध्वनिम् ॥ १ ॥**

इतश्च तद्दूतधर्षणं चरमुखेन राज्ञा पूर्वं ( एव ) श्रुतम् । यतः—

**चरैः पश्यन्ति राजानो धेनुर्गन्धेन पश्यति । पश्यन्ति ब्राह्मणा वेदैश्चक्षुर्भ्यामितरे जनाः ॥ १ ॥**

स दूतस्तत्र पश्चाद्गतः । तदा तेन दूतेन तं राजाधिराजं ज्ञातवृत्तान्तं विज्ञाय यथातथं कथयित्वा पुनरप्यूचे—" देव बालचेष्टितमिदम् । पुनः प्रजापतिनृपो रेखामात्रमपि भवदाज्ञां न क्वापि लंघयति । तस्मादेतस्योपरि कोपो न कर्तव्यः " । इति श्रुत्वा स राजेश्वरो मौनमाश्रित्य स्थितः । अथ तस्य राज्ञः शालिक्षेत्राणि बहूनि सन्ति । परंतु तानि प्रतिवर्षं वारेण पार्थिवैः सिंहो-

पक्षवाद्रक्ष्यन्ते । पुनस्तस्मिन् वर्षे तेन राज्ञाश्वग्रीवेण वारकं विनाप्यन्यदूतमुखेन शालिरक्षणादेशः प्रजापतिनृपाय समादिष्टः । तदानीं प्रजापतिनृपः सचिन्तः सन् विमर्शनां कर्तुं लग्नः । एतावता ताभ्यां त्रिपृष्ठाचलाभ्यां विकटादेशं श्रुत्वा तस्येति निवेदितम्—‘ स्वामिन् चिन्तयालम् । एतत्कार्यं त्वावां करिष्यावः । भवद्भिर्निश्चिन्तैः स्थेयम् ’ । इति गदित्वा तौ द्वावपि बलशालिनौ यत्र शालिक्षेत्राणि सन्ति तत्र गतौ । तदवसरे शालिरक्षकाः सविस्मया एवं प्राहुः—“ एते शालयः सबलवाहनैर्नृपै रक्ष्यन्ते । परं युवां कावपि नवीनौ शालिरक्षकौ सन्नाहरहितौ सैन्यपरिवारवर्जितौ वर्तेथे ” । तदा त्रिपृष्ठ ऊचे—‘ भोस्तावन्मम सिंह एव दर्श्यताम् । यथा तद्रक्षणक्लेशं निशेषं सर्वेषामपि वारयामि ’ । ततस्तैर्जनैर्गिरिगुहास्थितो मृगेन्द्रस्तस्य दर्शितः । तदनन्तरं गुहाद्वारे रथाधिरूढः स त्रिपृष्ठोऽपि ययौ । तदानीं रथचीत्कारनादेन स केसरी जजागार । यदा मुखकुहरं प्रसार्य गुहाया निःसृतः , तदा स त्रिपृष्ठस्तं मृगारिं पदातिं दृष्ट्वा स्वयं रथादुत्तीर्णः । तं निरायुधमालोक्य खड्गरत्नमपि तत्याज । इति कुमारचेष्टितं निरीक्ष्य सिंहोऽपि विस्मितः—“ अहो आश्चर्यमेकं, यदेकोऽयमत्रागतः । द्वितीयं तच्चित्रं, यत्पादचारित्वम् । तृतीयं तच्चित्रं, यत् खड्गमोचनम् । तदस्य मदवज्ञाफलं दर्शयामि ” । इति विचिन्त्य नभस्तल उत्पत्य रोषात्त्रिपृष्ठमस्तकोपरि न्यपतत् । तेन त्रिपृष्ठेन स्वहस्तौ शीघ्रमेव केशरिणो मुखे क्षिप्तौ । कराभ्यां तस्यौष्ठद्वयं गृहीत्वा स केसरी जीर्णवस्त्रमिव द्विधा कृतः । तत्कलेवरं भूमौ निक्षिप्तमस्ति, तथापि तत्कलेवरं रोषेण प्रकंपमानं दृष्ट्वा त्रिपृष्ठसारथिना प्रोचे—“ भो अयं कुमारो नरसिंहः , त्वं तु पशुसिंहः । यदि सिंहेन सिंहो हतस्तर्हि भोः कोपं किं करोषि ? ” । तेन वचसा स मृगेन्द्रः प्रीतः सन्मृत्वा नरकं गतः । अथ प्रजापतिनृपांगजस्तच्चर्म प्रतिविष्णुभूपायार्पयत् । अथ च तेन तदादिष्टविद्याधरनरमुखेन कथापितं यत्—‘ भो अश्वग्रीवनृप मत्प्रसादात्त्वमोदनं भुंक्ष्व ’ । अश्वग्रीवेण

तच्चर्म दृष्ट्वा, तदुक्तं वचनमाकर्ण्य चित्त एवं चिन्तितम्—'य ईदृशो बलवान् स मय्यपि समर्थः स्यात्'। स्वचेतस्येवं ध्यायन् तस्थौ। अन्यदा सोऽश्वग्रीवनृपः कन्यास्वरूपं निशम्य ज्वलनजटिपार्श्वे तां पुत्रीं ययाचे। स ज्वलनोऽपि किमप्युत्तरं कृत्वा तद्दूतमुखेनैव स बोधितः। ततः परं प्रच्छन्नतया तां कन्यां पोतनपुरे नीत्वा नैमित्तिकोपदिष्टाय तस्मै त्रिपृष्ठाय दत्तवान्। एवं सति हरिश्मश्रुनामा सचिवः कुतोऽपि स्वयंप्रभाकन्यां विवाहितां श्रुत्वा स्वस्वामिनेऽश्वग्रीवनृपाय कथयति स्म। तदा तेन कुपितेनेति प्रत्यादिष्टम्—"भोः सचिव तौ त्रिपृष्ठाचलौ तथा मायाविनं ज्वलनाभिधं खेचरं गाढं बध्ध्वा शीघ्रमेवात्र समानय"। इत्युक्ते तेन दूतः प्रेषितः। स च दूतः पोतनपुरे गत्वा मदोत्कटैर्वचनैर्ज्वलनं प्रोवाच—"भोः कन्यारत्नं मम स्वामिनो ढौकय त्वम्। किमित्थं न जानासि? यद्विविधप्रकारेण रत्नानां प्रभुरेव स्थानम् यदुक्तम्—

मणिर्मेदिनी चन्दनं दिव्यहेतिर्वरं वामनेत्रा गजो वाजिराजः।
विना भूभुजं भोगसंपत्समर्थं गृहे युज्यते नैव चान्यस्य पुंसः॥ १॥

इत्युदित्वा दूते विरते सति ज्वलनः प्राह—"भो दूत मया कन्या त्रिपृष्ठाय दत्तास्ति। सांप्रतमेतस्या एष रक्षको जातः। मत्संबन्धो निवृत्तः"। इत्युक्ते त्रिपृष्ठोऽवादीत्—"रे दूत इयं कन्या मया परिणीतास्ति। यदि तव स्वाम्येतां कन्यां समीहते, तर्हि नूनं जीवितात्किं निर्विण्णोऽस्ति?। त्वत्प्रभोरिति निगद्य यदि किमपि बलमस्ति, तर्हि शीघ्रमागच्छेः"। इत्यादि दूतवाक्यात्तेन राज्ञा सर्वमपि श्रुतम्। ततः सोऽश्वग्रीवः कोपाक्रान्तस्तानात्मविद्विषो हन्तुं विद्याधरभटान् प्रेषितवान्। तदा ते भटास्तत्प्रेषिताः

पोतनपुरं प्राप्ताः । स्वस्वामिप्रेरिता युद्धं कर्तुं लग्नाः । तदा लीलयैव ते सर्वेऽपि त्रिपृष्ठेन जिताः । तदानीं स त्रिपृष्ठो विद्याधरसैन्यसमन्वितः श्वशुरालये समेतः । तत उभयोरग्रसैन्ययोर्युद्धे जाते सति विद्याधरैः पिशाचराक्षसव्याघ्रादीनां रूपाणि विद्याबलेन विहितानि । तद्भयेन त्रिपृष्ठसेना पलायिष्ट । तदा त्रिपृष्ठकुमारो रथारूढः खेचरैः समं स्वयं योद्धुं प्रारेभे । तथा च शंखं पूरयामास । ततः शंखनादेन सर्वं त्रिपृष्ठसैन्यं युद्धसज्जं बभूव । तथा रिपुसैन्यं पराभूतम् । तदा स्यन्दनसंस्थितोऽश्वग्रीवोऽपि तत्रागत्य त्रिपृष्ठेन समं स्वयं योद्धुं ढुढौके । असौ वाजिग्रीवो यैर्दिव्यास्त्रैर्युयुधे, तानि सर्वाणि त्रिपृष्ठेन तथा लीलयैव च्छिन्नानि यथा सहस्रकिरणस्तमांस्यवच्छिनत्ति । ततश्च सोऽश्वग्रीवनृपस्त्रिपृष्ठाय जयावहं चक्रं मुमोच । तदानीं तच्चक्रं तुम्बेन त्रिपृष्ठं वक्षसि ताडयति स्म । परंतु चक्रं तत्रैव स्थितम् । तदा तेन प्रजापतिपुत्रेण तदेव चक्रं स्वपाणावादाय वाजिग्रीवमित्युवाच—" रे अश्वग्रीव मम नमस्कारं विधाय सुखेन जीव "। इत्युक्तेऽश्वग्रीवो बभाषे—' वैरिप्रणामान्मरणं वरम् '। इत्युक्ते तेन चक्रं मुक्त्वा तदीयं शिरश्छिन्नम् । ईदृशी स्थितिरेवास्ति वासुदेवेन प्रतिवासुदेवो हन्यते एव । तदानीं सुदर्शनाख्यं चक्ररत्नं तन्मस्तकं छित्त्वा भूयस्त्रिपृष्ठसमीपे समागतम् । तदनन्तरं देवैस्त्रिपृष्ठशिरसि पुष्पवृष्टिः कृता । इत्युक्तं च—' अयं प्रथमो वासुदेवः समुत्पन्नः । तदनन्तरं स त्रिपृष्ठनृपतिर्दक्षिणभरतार्धं साधयामास । खंडत्रये आज्ञा प्रवर्तिता । वामभुजाग्रेण छत्रवत् कोटिशिला धृता । पश्चात्तस्य भूचरखेचरैर्वासुदेवपट्टाभिषेकः कृतः । तेन त्रिपृष्ठवासुदेवेन ज्वलनजटी विद्याधराधिपो विहितः । तथार्ककीर्तिकुमारस्य विद्युत्प्रभस्वसा ज्योतिर्माला त्रिपृष्ठादेशेन गेहिनी बभूव । तदनन्तरं स त्रिखंडाधिपतिस्त्रिपृष्ठनृपतिर्निजपुरं ययौ । तथा च तस्य राज्ञः सा स्वयंप्रभा राज्ञी षोडशसहस्रस्त्रीणां मुख्या जाताऽतीव वल्लभा जाता ॥

इतश्च श्रीषेणजीवः सौधर्मकल्पतश्च्युत्वाऽर्ककीर्तिनृपगेहे ज्योतिर्मालाराज्ञीकुक्षिसरोवरे यदावतीर्णस्तदा मात्रा बहुतेजसा व्याप्तो रविः स्वप्ने दृष्टः । ततः समये पुत्रजन्म बभूव । महोत्सवपुरस्सरं तस्य पुत्रस्य पित्राऽमिततेजा इति नाम दत्तम् । तन्नाम्ना प्रवर्धते । इतश्चार्ककीर्तिपिता ज्वलनजटी खेचराधिपोऽभिनन्दनमुनिपार्श्वे दीक्षां जग्राह । अथ सत्यभामाजीवः सौधर्मकल्पतश्च्युत्वा तस्यैवार्ककीर्तिराजस्य सदने ज्योतिर्मालाकुक्षौ यदा पुत्री जाता, तदा जनन्या स्वप्ने तारकसंयुता रजनी दृष्टा। तदनुसारतः प्रसवसमयादनन्तरं पितृभ्यां तस्याः सुताराभिधानं चक्रे । क्रमेण सा तारुण्यं प्राप्ता । तयाभिनन्दिताजीवः स्वर्गादुद्धृत्य त्रिपृष्ठस्य गेहिन्याः स्वयंप्रभायाः कुक्षौ पुत्रत्वेन यदावतीर्णस्तदा सांवा स्वप्नमध्ये लक्ष्मीदेव्या अभिषेकं ददर्श । तदनुमानेन तस्यांगजन्मनः श्रीविजय इति नाम परिकल्पितम् । ततः पुनस्तस्य त्रिपृष्ठवासुदेवस्य स्वयंप्रभाकुक्षिजन्मा द्वितीयो विजयभद्रनामा पुत्रोऽभवत्। ततश्च सिंहनन्दिताजीवः स्वर्गाच्च्यवनं विधाय तस्यैव त्रिपृष्ठस्यैव गेहिन्यां स्वयंप्रभायां पुत्री संजाता । तस्या ज्योतिष्प्रभेति नाम दत्तम् । सा क्रमेण यौवनं प्राप ॥

इतश्च वासुदेवनृपेण तस्या ज्योतिष्प्रभायाः कृते स्वयंवरः कृतः । दूतप्रेषणात्तत्र सर्वे महीभुजः समाहूताः । एतस्मिन्नवसरेऽर्ककीर्तिना वासुदेवान्तिके स्वसचिवः प्रेषितः । स तत्र समेत्य विष्णु प्रति प्राह—" हे देव मत्स्वामिना विज्ञप्तमस्ति, यदि भवतामादेशः स्यात्तर्हि मत्पुत्री सुताराप्यत्रैव निजेच्छया वरं वृणुते "। इत्युक्ते गोविन्दो मुमुदे । इति वचः समादिष्टम्—' शीघ्रमेव समागच्छतु । मम गेहस्य तथार्ककीर्तिगृहस्य नान्तरं चिन्त्यम् '। इति समादिष्टे स चार्ककीर्तिनृपः पुत्रीं समादाय अमिततेजसा सुतेनान्वितस्तत्र समाययौ । वासुदेवेन सविशेषं सत्कृतः । अथ त्रिपृष्ठः शुभवासरे स्वयंवरमण्डपमकरोत् । तत्र बहुशो मञ्चाः संस्थापिताः ।

नामांकितान्यासनानि निवेशितानि । ततः समाहूताः पार्थिवास्तेष्वासनेषु क्रमेण निषण्णाः । तेषां मध्ये तौ विष्णुबलभद्रावप्युपविष्टौ । अत्रान्तरे स्नानं विधाय श्वेतवासांसि परिधाय श्वेतपुष्पांगरागसहिते विशालशिबिकामारुह्य ज्योतिष्प्रभासुताराख्ये द्वे अपि राजकन्ये तत्र समाजग्मतुः । तदनन्तरं तत्र समागत्य शिबिकातः समुत्तीर्य निखिलभूपान्निरीक्ष्य ज्योतिष्प्रभा कन्या वरमालाममिततेजःकंठेऽक्षिपत् द्वितीया सुतारा श्रीविजयकंठे वरमालां चिक्षेप । तदा सर्वैरपि भूचरखेचरैरित्युक्तम्—'अहो कन्यकाभ्यां साधु वृतं साधु वृतम् । अथ राजा त्रिपृष्ठस्तथाऽर्ककीर्तिनृपोऽपि तान्नृपान् यथाशक्ति सत्कृत्य बहुमानेन विसृज्य च स्वस्वकन्ययोर्विवाहं प्रीत्या चक्रतुः । तदनन्तरमर्ककीर्तिनृपो ज्योतिष्प्रभां वधूं समादाय, स्वपुत्रीं सुतारां तत्र मुक्त्वा निजनन्दनोपेतः स्वपुरमाजगाम । सुखेन राज्यं करोति । अथान्येद्युः सोऽर्ककीर्तिर्वैराग्यरंगेण स्वसूनवेऽमिततेजसे राज्यं दत्वा मुनिपार्श्वे व्रतं जग्राह ॥

क्रमेण त्रिपृष्ठवासुदेवे परलोकं प्राप्ते सत्येकदा तत्र पोतनपुरे श्रीश्रेयांसजिनशिष्याः श्रीसुवर्णकलशाख्याः सूरयः परिवारसमन्विताः समायाताः तदानीं तान् गुरून् समेतान् श्रुत्वा पुरोद्यानेऽचलः प्रणमनार्थं गतः । तत्र गत्वा जैनाचार्यं नत्वा मोहनिवारिणीं देशनावाणीं स शुश्राव । प्रस्तावं दृष्ट्वा इति पृष्टम्—'हे भगवन् स मम कनिष्ठो गुणज्येष्ठस्त्रिपृष्ठः कां गतिं गतः ?'। इति पृष्टे सूरिरुवाच—'स त्वद्भ्राता पञ्चेन्द्रियादिजीववधे रतः कठोरात्मा महारंभतत्परो मृत्वा सप्तमं नरकं ययौ'। तद्वचः श्रुत्वा स्नेहव्याकुलोऽचलः सुतरां विललाप—'हा विश्ववीर हा धीर तवेदृशी का गतिर्बभूव ?'। तदा गुरुणोक्तम्—"भो मा विषीद । पूर्वंजिनोदितं वाक्यं शृणु । अस्य जीवश्चरमजिनेश्वरो भविष्यति"। इत्युक्ते सोऽप्यचलः श्रीविजयं राज्ये निवेश्य, तथाऽपरं सुतं यौवराज्ये न्यस्य, तस्य गुरोः पार्श्वे दीक्षामग्रहीत् ॥

इतश्च राज्ञः श्रीविजयस्य राज्यं पालयतः सत एकदा तस्य सभास्थितस्य प्रतीहारेणागत्य विज्ञप्तम्—'हे प्रभो त्वन्मन्दिरद्वारे त्वन्मिलनार्थं नैमित्तिकश्चैकः समागतोऽस्ति । स आयातु वा प्रतियातु ?" । ततो राजादेशेन सभामध्ये समागतः । राज्ञे आशीर्वादं दत्वा यथोचितस्थाने समासीनः । ततो राजा प्राह—"अहो निमित्तज्ञ यदि त्वत्करे पुस्तिकास्ति, तर्हि शुभाशुभं यज्ज्ञानेन पश्यसि, तत्त्वं शीघ्रमेव ब्रूहि" । स निमित्तवित्प्राह—"हे देव यदहं निजज्ञानेन पश्यामि, तद्वक्तुं न शक्यते, पुनस्त्वदादेशेन कथ्यते—इतः सप्तमे दिने पोतनपुराधीशमस्तके निश्चयेन विद्युत्पातो भविष्यति" । तन्निशम्य समस्तापि सभा वज्राहतेव बभूव । तदा श्रीविजयराजेन सकोपेनेत्थमुक्तम्—'रे निमित्तिकाधम यदा पोतनपुराधिपशिरसि विद्युत्पतिष्यति, तदा त्वच्छिरसि किं पतिष्यति ?' । नैमित्तिको जगाद—"हे राजन् मह्यं त्वं किं कुप्यसि? यन्मया ज्ञानेन दृष्टं तत्कथमप्यन्यथा न स्यात् । तदा मम मस्तके वस्त्राभरणरत्नानां वृष्टिर्भविष्यति" । इत्युक्ते राज्ञा प्रोक्तम्—'भो त्वया ह्येतन्निमित्तं कुतः शिक्षितम् ?' । स बभाषे—श्रूयताम् । बलदेवस्य दीक्षाकाले मयापि दीक्षा समाश्रिताऽभूत् । कियत्कालं प्रतिपालिता । तदा यच्छास्त्रमधीतं तत्प्रमाणेनैतावन्मात्रं वदामि । सर्वज्ञशासनं विना सम्यग्ज्ञानं नान्यत्र विद्यते । पश्चादहं विषयासक्तः सन् गृही जातः । अथ धनाशया भवत्समीपेऽत्र समागतोऽस्मि" । तदा रामस्तोऽपि राजलोकस्तन्निमित्तं सत्यं ज्ञात्वा स्वस्वामिरक्षणोपायं व्यचिन्तयत् । तत्र तन्मध्ये चैको मंत्री प्राह—"यतः स्वामी सप्त वासरान् समुद्रमध्ये यानरूढः स्थाप्यते" । तदा द्वितीयो मंत्री प्रोवाच—"यद्यपि पानीये विद्युन्न स्फुरति, पुनस्तथापि यानपात्रे कदाचित् पतति, तदा किं क्रियते ? ततः कारणाद्वैताढ्यशैलस्य गुप्तगुहामध्ये प्रक्षिप्य स्वामी विद्युद्भयाद्रक्ष्यते" । ततस्तृतीयोऽवादीत्—"नायमुपायः शुभाय भवति । विशेषतः कष्टहेतुः स्यात् । अथात्र दृष्टान्तः श्रूयताम्—

विजयपुरे रुद्रसोमनामा द्विज आसीत् । तत्प्रिया ज्वलनशिखा । तत्कुक्षिभूः शिखिनामा सुतोऽभूत् अन्येद्युस्तस्मिन्नगरे कश्चिद्राक्षसो मांसलोलुपः समेतः । स च प्रत्यहं भूरिमानुषान् मारयति । एतावता पुरस्वामिना मंत्रिभिः समं विमृश्य तस्य पश्चादस्येति व्यवस्था कृता—' दिनं प्रत्येकं मानुषं तवाहं दास्ये ' । इत्युक्ते तेन प्रतिपन्नमिदं । तदनन्तरं राज्ञा सर्वपौराणां नामानि विलिख्य, गोलकान् कृत्वा, प्रतिदिनमेकैकं गोलकं निष्कास्य, तन्मध्ये यन्नाम भवति, तमाकार्य, राक्षसस्य दीयते । अपरेषां रक्षणं स्यात् । एवं सति एकदा तस्य द्विजपुत्रस्य नाम निर्गतम् । तदा तज्जननी गाढं रुरोद । तदीयं रुदनं श्रुत्वासन्नगृहस्थितैर्भूतैः करुणया तस्यै ब्राह्मण्यै इति निगदितम्—" हे अंब खेदं मा कृथाः । यदि तव पुत्रो राज्ञा राक्षसस्य दत्तो भविष्यति, तर्हि वयं ततोऽप्यानीय तव दास्यामः " । इत्युक्ते सा प्रमुदिता । तदनन्तरं यदा तस्याः सुतो भूभुजा तस्य पश्चादस्य दत्तस्तदा दत्तसंकेतैर्भूतैस्तस्मादपहृत्य तन्मातुः समर्पितः । ततस्तया मृत्युभीतया सुतो गिरिगुहायां निक्षिप्य द्वारं पिधाय मुक्तः । एतावता तत्रस्थेन महताजगरेण स विप्रांगजः कृपायां गलितः ॥

अतः कारणाद्विद्युत्कर्मणा भाव्यमस्ति, तत्केनाप्यन्यथा कर्तुं न शक्यते । परं तु दुरितोपशान्त्यै तपश्चरणादि विधेयम् " । इति वाक्यमाकर्ण्य चतुर्थो मंत्री बभाणे—' एतेन सत्यमुक्तम् । परंतु मच्चित्ते यदस्ति, तदहं भवतां कथयामि ' । इत्युक्ते नृपादेशेन स प्रोचे—" अमुना नैमित्तिकेन पोतनाधीशस्य शिरसि विद्युत्पातो निगदितोऽस्ति, न तु श्रीविजयस्यैव । ततः कारणात्सप्त दिनानि यावदेतस्य पुरस्यापरः स्वामी क्रियते । तस्यैवाज्ञा विस्तार्यते " । इति निगदिते नैमित्तिकेनापि तन्मतिः प्रशंसिता—" अनेन साधूक्तम् । इत्थं क्रियताम् । अहमेतत्कथनायात्र समागतोऽस्मि । राजा श्रीविजयस्तपोनियमतत्परः सप्तवासरान् जिनगृहान्तस्तिष्ठतु,

यथा कष्टमिदं विलयं याति" । इति निगदिते राजा प्राह—'यस्य कस्यापि राज्यं दीयते, सोऽपि विपद्यते, तदन्यकृत्यम् । कथमेवं विधीयते ?' । नृपोक्तमिति वचः श्रुत्वा, मंत्रिभिः संभूय, विमृश्योक्तम्—"यक्षस्य प्रतिमायाः पट्टाभिषेकः क्रियते । तदाज्ञा प्रवर्त्यते । यदि देवतानुभावेन तस्या यक्षप्रतिमायाः कष्टं न स्यात्तर्हि भव्यम् । कदाचिद्भविष्यति विघ्नं, तर्हि काष्ठमययक्षप्रतिमा विनश्यति। पश्चात्सा नवीनापि भवति" । इति वचो निशम्य श्रीविजयराज्ञापि प्रतिपन्नम् । ततश्च स नृपः सान्तःपुरः श्रीजिनालयं गत्वा पौषधमादाय तपोनियमतत्परः पञ्चपरमेष्ठिध्यानपरायणः संस्तारक एव मुनिवत्तस्थौ । अन्ये मंत्रिसामन्ताद्या नृपतेः पदे यक्षप्रतिमां संस्थाप्य तत्समीपे स्थिताः । ततः सप्तमेऽहनि मेघैः कृष्णाभ्रमार्गेण व्याप्तम् । महद्गर्जितं विधाय तोयदो वृष्टिं व्यधात् । तदा वारंवारं झात्कारं कुर्वती भयावहा विद्युत्तस्मिन्नेव यक्षरूपे पपात । यक्षप्रतिमा विनष्टा, राज्ञस्तु कुशलं जज्ञे । सर्वोऽपि जनश्चमत्कृतः । उपसर्गे विलयं गते राजा नैमित्तिकगिरा पुनरपि स्वसदने समागतः । तदानीं स निमित्तज्ञः सर्वान्तःपुरनारीभिः प्रमोदाद्रत्नालंकारदुकूलैः सत्कृतः । राज्ञापि भूरिद्रव्येण सत्कृतः संमान्य स विसृष्टः । यक्षप्रतिमा नवीना रत्नमयी कारिता। जिनबिंबानां सविशेषं पूजा विधापिता । तेन भूभुजा स्वराजधान्यां पुनर्जन्ममहोत्सवाः कारिताः ॥

इतश्चैकदा स श्रीविजयो नृपः सुतारया देव्या सह ज्योतिर्वनाभिध उद्याने क्रीडार्थं ययौ । तत्र गिरीणां छायावत्सु शिलातलेषु भर्त्रा सह भ्रमन्ती क्रीडन्ती सा सुतारा राज्ञी मनोहरांगी एकं सुवर्णवर्णं मृगं निरीक्ष्य स्वामिनं प्रत्यूचे—'हे प्राणेश कुरंगमेनं समानीय मम समर्पय' । तदा स्नेहमोहितो राजा तद्ग्रहणार्थं दधावे । सोऽपि वेगेनोत्प्लुत्य गगनं गतः। अत्रान्तरे नृपप्रिया सुतारा कुर्कुटसर्पेण दष्टा । तदा तया गाढस्वरेण पूत्कृतम्—'हे नाथ शीघ्रं समागच्छ' । तदीयं पूत्कारं श्रुत्वा झटित्येव राजा प-

आभिवृत्तः सन् विषार्दितां तां विलपन्तीं ददर्श । तदनन्तरं शीघ्रमेव या मंत्रतंत्रादिका क्रिया विहिता, सापि निष्फला बभूव । क्षणान्तरेण सा देवी राज्ञः पश्यतोऽपि लोचने निमील्य म्लानवदना सती गतचेतना जाता । ततोऽनन्तरं भूपालोऽपि मूर्छां प्राप्य महीतले पपात । महता कष्टेन संज्ञां प्राप्यैवं विललाप—' हे दिव्यस्त्रीसमानरूपे हे गुणवति सुतारे मम प्राणवल्लभे त्वं क्व तिष्ठसि' । एवं बहुधा विलप्य स नृपतिर्मरणाय सज्जो बभूव। तदा पदातिवर्गेण राजलोकस्याप्ययं समाचारो ज्ञापितः। नृपतेर्माता स्वयंप्रभा विजयभद्राभिधो भ्राता (च) अमुं वृत्तान्तं श्रुत्वा यावद्गाढं दुःखितौ जातौ, तावन्नभोमार्गेण तत्र समेत्य पुमानेकोऽवदत्— हे देवि स्वयंप्रभे विषादेन पूर्यताम् (अलमित्यर्थः) । मद्वचः श्रूयताम् । रथनूपुरस्वामिनाऽमिततेजसा पूजितः संभिन्नश्रोतनामा नैमित्तिकप्रवरोऽस्ति । स मत्पिता । दीपशिखाभिधानोऽहं तदंगजः । अन्यदा यावदावां तातपुत्रौ ज्योतिर्वनं प्रति क्रीडां कर्तुं प्रचलितौ तावत्पुरोऽग्रे चमरचंचापुरीस्वामिनाऽशनिघोषेण राज्ञा ह्रियमाणां गतत्राणां नृपप्रियां सुतारां दृष्ट्वावाभ्यां तं खेचरं प्रतीत्थं बभाषे— ' रे दुष्ट पापात्मंस्त्वमस्मत्स्वामिभगिनीमपहृत्य क्व यास्यसि ' । इत्युक्ते तया सुतारयावां प्रति प्रोक्तम्—' अत्र युवयोः प्रयासेनालम् । परंतु पोतनपुरासन्नवनमध्ये गत्वा वेतालिन्या विमोहितः श्रीविजयनृपतिः संबोध्यताम् । सुतारारूपया तया सह मर्तुकामोऽस्ति' । इत्युदिते आवाभ्यां तत्रागत्य राजा बोधितः । सा वेतालिनी दुष्टविद्या प्रणष्टा । अथ देवीसमाचारं विज्ञाय श्रीविजयनृपतिस्तत्प्रापणोद्यतोऽस्ति । तदाज्ञया भवतां समाचारं ज्ञापयितुमत्राहं समागतः " । तदनन्तरं स्वयंप्रभादेव्या सत्कृतः स पुनरपि राज्ञः समीपमाययौ । तदनन्तरं नृपोऽपि ताभ्यां संभिन्नश्रोतदीपशिखाभ्यां रथनूपुराभिधे स्वपत्तने नीतः । तत्र राज्ञामिततेजसा श्रीविजयस्य बह्वीं प्रतिपत्तिं विधाय समागमनस्वरूपं पृष्टम् । तदा श्रीविजयेन राज्ञा स्ववृत्तान्तो निवेदितः ॥

इतश्च तत्स्वरूपं श्रुत्वा कोपाक्रांततयामिततेजसा नृपेण शिक्षां दत्वाशनिघोषाय मरीचिनामा दूतः सत्वरं प्रेषितः । तदानीं स दूतश्चमरचंचायां गत्वाशनिघोषं प्रत्युवाच—" नो मत्स्वामिनः स्वसा श्रीविजयनृपपत्नी सुतारा नाम सती त्वयाऽज्ञानादानीतास्ति । तां सुखेन समर्पय । अन्यथानर्थो भविष्यति" । इत्युक्तेऽशनिघोषः प्राह—" रे दूतैषा स्त्री किं मया समर्पयितुमानीतास्ति ? । यः कश्चिदेनां मत्समीपतो गृहीतुमिच्छति, स मत्खड्गेन मर्तुकामो ज्ञेयः" । इत्युक्त्वा गलके ग्राहयित्वा स दूतोऽशनिघोषेण निर्वासितः । तेन तदनन्तरं निजस्थानमागत्य स्वस्वामिने सर्वमपि विज्ञप्तम् । ततश्चामिततेजसा श्रीविजयस्य विद्याद्वयं दत्तम् । एका शस्त्रनिवारिणी द्वितीया बन्धमोक्षकारिणी । अथ सप्तभिर्दिनैरेकैकां पृथक् पृथक् श्रीविजयः प्रोक्तविधिना साधयामास । ततः सिद्धविद्यः सन् स पोतनपुराधीशः शत्रुविजयाय चचाल । शतशो रश्मिवेगाद्याः कुमाराः श्रीअमिततेजसः सुताः श्रीविजयमनुप्रचलिताः । अन्यैरपि विद्याबलभुजबलोपेतैः सुभटैः सह स श्रीविजयराजाऽशनिघोषपुरान्तिकं प्राप । इतश्चामिततेजसा राज्ञः सहस्ररश्मिना ज्येष्ठपुत्रेण सहितः परविद्याच्छेदिनीं महाज्वालाभिधां विद्यां साधयितुं स्वयं हिमवन्तगिरौ ययौ । तत्र गत्वा मासिकभक्तं कृत्वा स विद्यां साधयामास । तदनन्तरमशनिघोषः सैन्यसमन्वितं श्रीविजयं समागतं श्रुत्वा, युद्धाय सबलवाहनान् स्वान् पुत्रान् प्रैषीत् । ततस्तयोः सैन्ययोर्घोरः संग्रामः प्रवृत्तः । परंतु द्वयोर्मध्यान्नैकमपि सैन्यं हारयति स्म । एवं प्रकारेणामिततेजः कुमारैर्मासं यावद्युद्धं कृत्वाशनिघोषपुत्राः प्रौढा अपि पराजिताः । तदनन्तरमशनिघोषेण स्वयं युद्धं प्रारब्धम् । तस्मिन् युद्धे प्रवर्तमाने तेनाशनिघोषेण बलिष्ठा अप्यमिततेजसः कुमारा जिताः । ततश्च श्रीविजयो राजा स्वसैन्यं भग्नं दृष्ट्वा स्वयं संग्रामेऽढौकिष्ट । तदा क्रुद्धेन श्रीविजयेन खड्गप्रहारं दत्वा तमशनिघोषं द्विधा चक्रे । तदाशनिघोषेण द्वयं रूपं कृतम् । पुनः खड्गप्रहारेण रूपद्वयमपि हतं, ततोऽशनिघोषच-

तुष्टयी जाता । एवं खंड्यमानः सोऽशनिघोषनृपतिर्मायया शतरूपो बभूव । यथा यथा प्रहारं दत्ते, तथा तथा रूपवृद्धिर्भवति । एतावता स विजयनृपो यावता तद्वधे निर्विण्णस्तावता स एवामिततेजोनृपः सिद्धविद्यस्तत्रायययौ । तदानीममिततेजसा विद्यावलेन तदीयां मायां निराकृत्य भयेन तं नश्यन्तं निरीक्ष्य, तस्या एव विद्याया इति समादिष्टम्—' अयं पापीयानशनिघोषस्त्वया दूरादपि समानेतव्यः ' । इत्युक्ते सा विद्यादेवी तत्पृष्ठं लग्ना सीमनगे ययौ । तत्र श्रीऋषभजिनप्रासादसन्निधौ सुरैर्वन्द्यमानं संप्राप्तकेवलज्ञानं तं बलदेवमुनिं दृष्ट्वा स तदीयं शरणं प्रपन्नः । देवतया पश्चाद्वलित्वा तत्स्वरूपं सर्वमप्यमिततेजसे समाख्यातम् । अथामिततेजसा राज्ञा मरीचिनामानं दूतं प्रति प्रोचे—' भो दूत त्वया चमरचंचातः सुतारां देवीं समादाय मत्समीपे समागन्तव्यम् ' । इत्युदित्वा श्रीविजयनृपान्वितः सर्वसैन्यपरिवृतः सन् भेरीभांकारैः समं सोऽप्यमिततेजा नृपोऽपि तत्र सीमनगे वज्रजङ्घमुनिं नंतुं ययौ । तत्र जिनालये गत्वा प्रथमजिनेन्द्रं स्तुत्वा तौ श्रीविजयामिततेजसौ बलदेवमुनिपार्श्वे जग्मतुः । तदा मरीचिदूतोऽपि देवीं सुतारां समादाय सत्वरं तत्रागात् । तदानीं सा देवी अखंडशीला सती श्रीविजयस्य राज्ञः प्रदत्ता । अथ तस्मिन्नवसरेऽशनिघोषनृपतिः समुत्थाय तौ श्रीविजयामिततेजसौ क्षामयामास । ताभ्यां स भृशं सन्मानितः । परस्परं ते गतमत्सरा बभूवुः । अत्रान्तरे केवलिना धर्मदेशना प्रारब्धा । तद्यथा

रागद्वेषवशीभूता जीवानर्थपरंपराम् ।
कृत्वा निरर्थकं जन्म गमयन्ति यथा तथा ॥ १ ॥

याभ्यां रागद्वेषाभ्यां ग्रस्ताः प्राणिनो मोक्षपदं गन्तुं न समर्थाः एतौ प्रबलशत्रुरूपौ ज्ञात्वा भो जनास्तद्विषये विगतादरा

भवन्तु ”। तां देशनां श्रुत्वा नृणांसमूहाः प्रतिबुद्धाः सन्तः केचिद्दीक्षां जगृहुः । केचित्सुश्रावकत्वमंगीचक्रुः । तदाशनिघोपस्तस्य केवलिनः समीपे पृच्छति स्म—‘ हे प्रभो मया रागद्वेषौ विना इमां सुतारां हृत्वा निजगृहे कथं नीता ’। इत्युदिते केवली प्राह— “ पूर्वभवे रत्नपुराभिधे पुरे श्रीषेणनामा भूपतिरस्यामिततेजसो जीवोऽभूत् । तदा त्वं कपिलनामा विप्रोऽभवः । सत्यभामा त्वत्प्रिया जज्ञे । भवं भ्रान्त्वा क्रमेण या सत्यभामा सा सुतारा जाता । तथा यः कपिलः सोऽपि भवभ्रमणं विधाय तपस्विनां कुले जन्म प्राप्य तत्र बालतपः कृत्वा मृत्वा भो अशनिघोष स त्वं जातः । हे राजन् पूर्वभवसंबन्धाद्भवता रागं विनाप्यसौ हृता । पुरातनभवेऽपि त्वय्यसौ विगतस्नेहाऽभूत् । अतः कारणात्त्वमप्येतस्यां मन्दानुरागो वर्तसे । इतश्च स्वस्वपूर्वभवान् श्रुत्वा तेऽमिततेजःश्रीविजयादयः संहर्षिताः सन्त एवमूचुः—‘ अहो ज्ञानस्य किमप्यसाध्यं नास्ति ’। इत्युक्त्वा केवलिनं प्रणिपत्यामिततेजसा नृपेण पृष्टम्— ‘ प्रभो भव्योऽहमभव्यो वा ’। इति प्रश्ने कृते केवल्याह—“ हे राजन्नितो भवान्नवमे भवेऽत्रैव भरते त्वं पञ्चमश्चक्रवर्ती भविष्यसि । तस्मिन्नेव भवे षोडशः श्रीशान्तिनाथस्तीर्थकृद्भविष्यसि । तथासौ श्रीविजयजीवस्त्वत्पुत्रो भूत्वा तस्यैवाद्यगणधरो भविता ”। इति श्रुत्वा तस्यैव केवलिनः पार्श्वे ताभ्यां सम्यक्त्वमूलः श्राद्धधर्म उपाददे । तथाशनिघोषः स्वपुत्रं राज्ये संस्थाप्य विरक्तचित्तस्तस्यैव केवलिनः समीपे दीक्षां जग्राह । तथा श्रीविजयराजस्यांबा स्वयंप्रभा देवी बहुनारीपरिवृता बलभद्रमुनिसमीपे व्रतमाददे । अथ केवलिनं नत्वा तौ श्रीविजयामिततेजसौ स्वस्वपरिवारसमन्वितौ निजनिजस्थानं प्रयातौ देवपूजागुरूपास्तितपःप्रभृतिप्रयोजनैः श्रावकत्वं द्योतयन्तौ कालं निन्यतुः । एकदा तेन पुण्यात्मनामिततेजसा महीयान् पञ्चवर्णरत्नमयः प्रासादः कारितः । श्रीजिनप्रतिमास्तत्र संस्थापिताः । तथा तत्समीपे तेन राज्ञा पौषधागारं कारितम् । तस्मिन् स्थान उपविष्टः सन् विद्याधरसभान्तरे धर्मं कथयति । अ-

अन्तरे चारणश्रमणमुनियुगलं शाश्वतजिनान्नन्तुं गच्छति । जिनालयं दृष्ट्वा तच्चैत्यवन्दनाहेतोस्तौ द्वावप्यवतीर्णौ । तदानीं राज्ञामिततेजसा तौ मुनिवरौ प्रवरासन उपवेश्य भक्तिपूर्वकं वन्दितौ। तदा तत्रैकः साधुरित्याचख्यौ—" यदि त्वं स्वयमेव धर्मं जानासि, तथाप्यस्माकं धर्म एव समाख्यातुं युक्तः। ततः कारणाच्छृणु। भो राजन्मानुष्यादिसामग्रीं लब्ध्वा भवस्वरूपं ज्ञात्वा निरन्तरं (नित्यं) सुखार्थिभिः सततं धर्म एव विधेयः । तस्य धर्मस्य मनसाप्यन्तरे कृते सान्तरायं सुखं स्यात् । यथा मत्स्योदराख्यस्य धनदनामश्रेष्ठिपुत्रस्य सुखान्यन्तरायसहितान्यभूवन् " । तदनन्तरं राजामिततेजा भक्त्या विरचिताञ्जलिर्मुनिं प्रत्येवमाचष्ट—' को मत्स्योदरः ? केन कर्मणा तेनान्तरायसहितं सुखं लेभे ? तत्कथा कथ्यताम् '। इति गदिते मुनिः प्राह—

## अथ मत्स्योदरकुमारस्य कथा।

अत्रैव भरतक्षेत्रे स्फीत्याऽमरावतीसमानं कनकपुरं नाम नगरमस्ति । तत्र नयविनयादिगुणालंकृतः कनकरथनामा नृपो बभूव । तस्य राज्ञः पट्टराज्ञी कनकश्रीनाम्नी समभूत्। तत्र पुर औदार्यादिगुणाधारो धर्मिष्ठधुरीणो राजमान्यः श्रेष्ठी रत्नसाराभिधानः समभूत् । विशुद्धशीला सलज्जा प्रियभाषिणी रत्नचूलाभिधा तत्प्रिया संजज्ञे । तयोः पुत्रः सच्चरित्रः कलाकुशलो धनदनामा संजातः ।

इतश्च तस्मिन्नगरे सिंहलाभिधो द्यूतकारः कपर्दकैर्नित्यं पुरदेवीप्रासादे क्रीडति । एकदा मन्दभाग्यतया स किमपि न जिगाय । तेन कारणेन स दुष्टात्मा रुष्टः सन् देवीमिति प्राह—" अहं तव देवकुले नित्यं तिष्ठामि । त्वत्सेवां करोमि । रे दुष्टदेवते त्वं मम द्रव्यं कथं न ददासि ? । अथाद्य प्रकटीभूय मम किमपि द्रव्यं देहि। अन्यथाहं तवानर्थं करिष्यामि" । इत्युक्ते देवता प्राह—

" रे दुरात्मन् त्वत्पित्रा वा त्वया किं मम द्रव्यं समर्पितमस्ति, यत्सहसा याचसे ? " इति तद्वाक्यं श्रुत्वा, पापाणमुत्पाट्य स द्यूतकृद्देवतां प्रोवाच—" कुतोऽप्यानीय मम धनं प्रयच्छ । नो चेत्तदा त्वन्मूर्तिभंगं करिष्यामि " । तदनन्तरं सा देवता दध्यौ—" असौ दुरात्मा स्फुटवक्ता । अस्य निष्ठुरस्य विरूपं कुर्वतः को निवारयिष्यति ? । अस्य किमपि दत्तं विलोक्यते " । इति विचिन्त्य सा देवता गाथासहितं पत्रमेकं तस्य करे प्रददौ । तदानीं स पापात्मा जजल्प—' रे रंके अमुना पत्रखंडेन किं कुर्वे ? ' । तदा देवताब्रवीत्—' त्वया चतुष्पथे गत्वा गाथेयं विक्रेतव्या । यः कोऽपि दीनारसहस्रं ददाति, तस्य दातव्या ' । इति निशम्य स तां गाथापत्रिकां गृहीत्वा चतुष्पथे गत्वेत्युवाच गाढस्वरेण—' गाथेयं लभ्यते, गृह्यतां भोः ' । इत्याख्याते जनैः पृष्टं—' भोः किं वस्तु विद्यते ? ' । तदा तेन गाथापत्रकं दर्शितम् । तदा तदसारं वस्तु दृष्ट्वा सकौतुकैर्जनैर्मूल्यप्रश्नः कृतः । तदा स दीनारसहस्रकं प्रोवाच । असंभाव्यमूल्यत्वान्न केनापि गृहीतम् । एतावता तेन तस्य श्रेष्ठिपुत्रस्य धनदनाम्नो हट्टे क्रमेण गत्वा सा गाथापत्रिका तस्मै दर्शिता, मूल्यमप्याख्यातम् । तदानीं स श्रेष्ठिपुत्रस्तत्पत्रकं गृहीत्वा वाचयामास । एवं लिखितमस्ति

[1] " जं चिय विहिणा लिहियं, तं चिय परिणमइ सयललोयस्स ।
इय जाणेविण धीरा, विहुरे वि न कायरा हुंति " ॥ १ ॥

इमां गाथां वाचयित्वा धनदो दध्यौ—' इयं लक्षेण न लभ्यते । दीनारसहस्रेण समर्घ्या, तर्हि गृह्यते ' । इति

---

१ " यच्चैव विधिना लिखितं तच्चैव परिणमति सकललोकस्य । इति ज्ञात्वा धीरा विधुरेऽपि न कातरा भवन्ति ॥ १ ॥ "

विचिन्त्य तत्प्रार्थितं मूल्यं तस्मै दत्वा, तद्गाथापत्रकं स्वीकृत्य, स वारं वारं गाथां वाचयामास । अत्रान्तरे तत्पिता रत्नसारश्रेष्ठी त-
त्रागत्य पुत्रं प्रति बभाषे—‘ भोः पुत्र त्वयाद्य किं व्यवहृतं ? तत्कथ्यताम् ’। इत्युक्ते प्रत्यासन्नवणिक्पुत्रैः सहासैरिति प्रोक्तम्—
“ हे श्रेष्ठिन् भवत्सुतेनाद्य महती व्यवहृतिः कृतास्ति । दीनारसहस्रेणैका गाथा गृहीता । नूनमनया वाणिज्यकलयासौ युष्मत्सुतः
श्रियं वर्धयिष्यते ” । ईदृशमुपहास्यवचनं श्रुत्वा श्रेष्ठी क्रुद्धः सन् पुत्रं प्रति प्राह—“ रे दुष्ट त्वमितो याहि, मुखं मा दर्शय । शा-
ला शून्या भव्या, परंतु तस्करपूरिता न भव्या । त्वया पुत्रेण सतापि किम् ”। इत्यपमानतां विचिन्त्य धनदत्तदापणाच्चित्ते गाथार्थं
चिन्तयन्निर्ययौ तदा पुरान्निःसृत्य दिनावसानसमये उत्तरस्यां दिशि समीपस्थवनमध्ये गतः । तत्र प्रवरं तटाकमेकं विमलजलपूर्णं दृष्टम् ।
तस्मिन् सरसि स्नात्वा पानीयं पीत्वा तदासन्नन्यग्रोधतरोर्मूले तदीयपत्रसंस्तरे रात्रौ सुष्वाप । एवंविधे प्रस्तावे दैवयोगतस्तत्र धनुर्धरो
व्याध एको जलपानार्थमागतान् वनचरान् हन्तुं समाययौ । तदा निद्रामध्ये तेन श्रेष्ठिपुत्रेण पार्श्वं परावर्तितम् । एतावता शुष्कपत्राणां
रवो जातः । तदा तेन व्याधेन चिन्तितम्—‘ कोऽपि वनेचरो गच्छन्नस्ति ’। इति विमृश्य स व्याधस्तद्धार्य शब्दानुसारेण शरं मुमो-
च । तेन शरेण सुप्तोऽसौ श्रेष्ठिपुत्रश्चरणे विद्धः । ततस्तेन वेध्यं विद्धं ज्ञात्वा विलोकनाय यावत्समीपमुपागतस्तावद्रुदनदोऽपि महारा-
वः संस्तां गाथां पठितुं लग्नः । इतश्च लुब्धकेन ध्यातम्—‘ हा मया मूढचेतसा कोऽपि निर्विघ्नः पथिकः सुप्तः सन् बाणेन हतः ’।
इति चिन्तयित्वा तत्पार्श्वे पृष्टम्—‘ भो भद्र मया त्वजानता त्वं क्व विद्धोऽसि ? ’। इत्युक्त्वा स तत्पादात्सायकं कर्षति स्म । त-
स्मिन् व्रणे पट्टबन्धं कुर्वाणः स तेन श्रेष्ठिसुतेन वारितः—‘ त्वं निजस्थानं याहि ’। इत्युक्त्वा श्रेष्ठिपुत्रेण विसृष्टः सन् स गतः । अ-
थ श्रेष्ठिपुत्रस्य व्रणाद्रक्ते निर्गच्छति प्रातः समये जाते तं निश्चेष्टं पतितं दृष्ट्वा मत्वबुद्ध्या भारण्डपक्षिणा गृहीत्वा वारिधिमध्यद्वीपे मु-

क्तः। यावत्तं भक्षयितुं समीहा कृता, तावत्केनापि चिह्नेन जीवन्तं ज्ञात्वा तं तत्र मुक्त्वा भारण्डपक्षी समुड्डीय गतः। अथ स शीतवातैः सचेतनः समुत्थाय यदा दिशो विलोकयितुं लग्नस्तदा मानुषोज्झितां तत्र महाटवीं ददर्श। तदा चित्ते चिन्तितम्—'क्व तत्पुरम् ? क्व चेयमटवी भीषणा ? अथवानया चिन्तया पर्याप्तं, दैवचिन्तैव बलिष्ठा'। इति चिन्तां कुर्वन् स क्षुधातृषापीडितो यावत्तस्मिन् शून्यद्वीपे फलजलाशया पर्यटन्नस्ति, तावन्निपतितगृहं पुरमेकं शून्यमद्राक्षीत्। तदा स विस्मितः। एतावता तेन तत्र परिभ्रमता कूपकं निरीक्ष्य कष्टेन तत्पय आकृष्य पीत्वा तृषा निवारिता। तथा कदल्यादिफलैः प्राणवृत्तिं विधाय भयेन पुराद्दूरस्थ एव स्थितः। अत्रान्तरे रविरस्तं गतः। तमसा विश्वं व्याप्तम्। तदा धनदेन गिरेः कस्यापि निकटे दारुणवह्निमुत्पाद्य शीतपीडां निवार्य रात्रिर्व्यतिक्रान्ता। ततः प्रातःसमये वह्निप्रदेशभूमिं सुवर्णमयीं जातां दृष्ट्वा स श्रेष्ठिसुतश्चिन्तयामास—'नूनं सुवर्णद्वीपोऽयम्। यस्मात्कारणादियं भूमिरनलदग्धा सती सद्य एव हेममयी जाता। तदा प्रमुदितेन तेन चिन्तितम्—'तर्हि कनकमहं पातयामि'। इति ध्यात्वा तेनेष्टिकानां सुसंघाताः स्वनामांकिताः कृताः। अग्नितापितास्ते सर्वेऽपि इष्टिकासंघातकाः स्वर्णीभूताः। अन्येद्युः स कुत्रचिद्गिरिनिकुंजे प्रभवरत्नसमुच्चयमद्राक्षीत्। ततस्तान्यपि रत्नानि स्वर्णसमीपे समानीतानि। एवं तेन सुवर्णेष्टिकारत्नानां गरीयान् राशिः कृतः। कदल्यादिफलैरन्वहं प्राणवृत्तिं चक्रे। एकदा तस्मिन् प्रदेशे सुदत्ताख्यसार्थवाहः समाययौ। तस्य याने पूर्वसंचितं जलेन्धनं निष्ठितम्। तदा सुदत्तसार्थवाहेन तं द्वीपं दृष्ट्वा जलेन्धनार्थं स्वपुरुषाः प्रेषिताः। तदा तत्र तैर्धनदं दृष्ट्वा इति पृष्टम्—'भो त्वं कः ?'। तदा धनदेनोक्तम्—'वनेचरोऽहं वर्ते'। ततस्तैरूचे—'तर्हि किमपि पानीयस्थानमस्माकं दर्शय'। ततस्तेन तेषां स कूपो दर्शितः। तदा तैः सार्थेशसेवकैः कूपसमीपे तत्सुवर्णादि ददृशे यत्तेन पुरा संचितमस्ति। तद्वीक्ष्य तैः पृष्टम्—

'भो वनचारिन् कस्येदं सुवर्णरत्नादि'। इति पृष्टे तेन प्रोक्तम्—'मामकीनं धनमिदम्। तथा य एतच्छन्नं स्थानं नयति, तस्य चतुर्थांशं यच्छामि'। इति यावता प्रोक्तं तावता स सार्थेशोऽपि तत्र समागात्। तदा धनदस्तस्य प्रणामादिविनयप्रवृत्तिं विदधे। सार्थवाहस्तं समालिङ्ग्य कुशलवार्तां पृष्ट्वा सुवर्णरत्नानां संप्रापणं प्रतिपन्नवान्। स्वभृत्यैस्तत्कनकरत्नादिकं वस्तु निजप्रवहणे प्रापय्य निक्षेपितम्। धनदेनापि तानि स्वर्णेष्टिकरत्नानि तेषां गणयित्वा प्रददे। अथ तच्छन्नं धनं दृष्ट्वा सार्थेशो लोभबुद्ध्या स्वान्नरानित्यादिदेश—'अयं कूपे क्षेप्यः'। इति स्वामिवचः श्रुत्वा तैः पुरुषैर्धनदं प्रत्यूचे—'भो उपकारिन् कूपाज्जलकर्षणं वयं न जानीमः। कूपजलाकर्षणे तव पुराप्यभ्यासोऽस्ति'। इत्युक्ते स दाक्षिण्येन जलकर्षणं कर्तुमुद्यतस्तदा तैर्निष्ठुरैः सार्थेशसेवकैः स शीघ्रमेव कूपे क्षिप्तः। तदानीं दैवयोगात्पर्णसंकुलायां कूपमेखलायां स धनदः पतितः। परंतु भाग्ययोगात्स्वल्पाप्यंगपीडा तस्य नाभूत्। अथ धनदस्तां गाथां चिन्तयन् कूपपार्श्वानि विलोकयितुं लग्नः। तदैकस्मिन् प्रदेशे विवरं दृष्ट्वा कौतुकाद्विवरं प्रविष्टः। ततश्च स धनदः सोपानपंक्त्या किंचिदधस्तनं गत्वा पुनः सरलमार्गे गच्छन् बहून्याश्चर्याण्यालोकयन् पुरस्तागतः। तत्र देवकुलमेकं ददर्श। तन्मध्ये तु गरुडारूढां चक्रायुधां प्रभावतीं देवीं चक्रेश्वरीं वीक्ष्य, परमभक्त्या तां नमस्कृत्य, शिरस्यञ्जलिं विधाय, वाग्विचक्षणो धनद एवं तुष्टाव—"हे श्रीऋषभस्वामिशासनदेवते, दुष्टकष्टापहारिणि, भक्तजनसर्वसंपत्करे, त्वं जय। अद्य देवि त्वं मया कष्टार्दितेन दृष्टा। त्वदीयौ चरणौ मम शरणं भवताम्"। इति भक्तिवचांसि श्रुत्वा देवी तुष्टा सती प्रोवाच—'भो वत्स तवाग्रे गतस्य सर्वं भव्यं भविष्यति। तथा च किमपि मत्समीपे प्रार्थय'। तदा धनदेनोक्तम्—'त्वद्दर्शने दृष्टे मया सर्वमपि फलं प्राप्तम्। अथ किं याचे?'। इत्युदिते तुष्टया देव्या महाप्रभावाणि पञ्च रत्नानि तत्करे प्रदत्तानि। रत्नप्रभावोऽपि गदितः—'रत्नमेकं सौभाग्यकारकं, द्वितीयं लक्ष्मीप्रदं,

तृतीयं रोगहरं, चतुर्थं विषनाशनं, पञ्चमं कष्टनिवारकम् ' । ईदृशं रत्नविचारं निवेद्य, रत्नानि पृथगुपलक्ष्य सा देवताऽदृश्या बभूव । सोऽपि तं रत्नगुणं चित्तेऽवधार्य यावताऽग्रे ययौ, तावत्तैकत्र व्रणसंरोहिणीं महौषधीमपश्यत् । तदा तेन सा महौषधी जगृहे । तथा स्वजंघां विदार्य, रत्नपञ्चकं मध्ये क्षिप्त्वा व्रणसंरोहिण्या महौषध्या तद्व्रणं रोधयामास । तदनन्तरमग्रे गच्छता पातालपुरमेकं दृष्ट्वा तत्र नक्ष्यनोज्यसमाकुलां मनुष्यपरिवर्जितां मन्दिरश्रेणीं हट्टश्रेणीं च निरीक्ष्य स धनद एकत्र महत्तरं गवाक्षमाकारमतोलिपरिशोभितं राजनिकेतनमपश्यत् । तत्र च स प्रविश्य सप्तमभूमिकां गत्वा बालिकामेकां दृष्ट्वा यावत्सविस्मयो बभूव, तावत्सा बाला तं धनदं प्रति बभाषे—" भो सत्पुरुष त्वं कुत आगतः ? शृणु भो भद्र इहागतस्य तव प्राणसंशयो वर्तते । तस्मात्कारणाच्छीघ्रमन्यत्र गच्छ, यदि जीवितेच्छास्ति " । इत्युक्ते धनदः प्राह—' भद्रे उद्वेगं मा कुरु । मम समग्रं वृत्तान्तं कथय । इदं नगरं शून्यं कुतस्त्वं च का ? ' । इति पृष्टे सा स्त्री तस्य रूपधैर्याभ्यां विस्मिता पुनराह—" चेत्तव कौतुकमस्ति, अहो सुन्दर तर्हि कारणं शृणु—

इहैव भरतक्षेत्रे श्रीतिलकं नाम पुरमस्ति । तत्र महेन्द्रराजनामा नृपोऽभूत् । स मत्पिता । एकदा स राजा परैः सीमालभूपालैः पराभूतः । इतश्च कश्चिद्व्यन्तरः समागत्य सस्नेहं तं राजानमभाषत—'भो राजंस्त्वं मम पूर्वभवमित्रं, ततः किमपि प्रयोजनं कथय, किं करोमि ? । इति गदिते राजा प्राह—' मम शत्रुविनाशने साहाय्यं कुरु ' । पुनर्व्यन्तरोऽवदत्—" एते तव शत्रवो मया हन्तुं न शक्याः , यतो मदधिकैर्व्यन्तरैरेते नूनमधिष्ठिताः सन्ति । तथापि किमपि तव साहाय्यं करोमि " । इत्युक्त्वा तेन व्यन्तरेण मत्पिता सपौरः सपरिवारोऽप्यत्र समानीतः । तेनेदं पातालपुरनामकं पुरं कृतम् । अस्य प्रवेशनिर्गममार्गौ कूपमध्ये विहितौ । तथा कूपरक्षार्थं द्वितीयं पुरं चक्रे । तदनन्तरं प्रवहणैः सर्ववस्तुसमागम इह भवति । अनया युक्त्या सर्वो जनः सुखेन तिष्ठति । ए-

र्यं सत्यन्यदा कश्चित्पल्लादः कूपप्रवेशसोपानपंक्तिं भंक्त्वात्र समाययौ। स दुरात्मा मांसलुब्धः पुरवासिनो जनान् खादितुं प्रवृत्तः। कियद्भिर्दिनैस्तेन पुरमिदं निर्मानुषं विदधे। तदनन्तरं यदा बहिःपुरनिवासी जनोऽपि तेन खादितुमारब्धस्तदा स जनः प्रवहणमारुह्यान्यत्र कुत्रापि गतः। एवं प्रकारेण सा नगरश्री तेन राक्षसेन शून्या विदधे। भो साहसिन् तेन दुरात्मना केवलमहं परिणेतुं रक्षितास्मि। इतो दिनात्सप्तमे दिनेऽतीते तेन ममाग्रे इत्युक्तं—'हे भद्रेऽहं प्रचंडो राक्षसो वर्ते। मनुष्यामिषलुब्धेन मयाऽत्र समागत्य, समग्रोऽपि पुरजनो निपातितः। त्वं कारणेन रक्षितासि'। इत्युक्ते मया पृष्टं 'किं कारणं?' तदा तेनोक्तं—'इतः सप्तमे दिने शुभग्रहं निरीक्षितं लग्नमस्ति। तस्मिन् दिने त्वामहं परिणीय स्वां गेहिनीं करिष्ये'। भो अद्य तत्सप्तमं दिनमस्ति। तस्य पल्लादस्य समागमनसमयः संजातोऽस्ति। यावदसौ नायाति, तावद्भो भद्र त्वं याहि"।

इति वाक्यं श्रुत्वा धनदः प्राह—"हे मुग्धे त्वं मा भैषीः। स पापात्मा मत्करेण मरिष्यति"। इति प्रोक्ते सा बाला प्रोवाच—'तर्हि तव तदीयमृत्युसमयं कथयामि। विद्यापूजनकाल एव स त्वया नूनं हन्तव्यः। तस्मिन् समये ह्यसौ न जल्पति, नोत्तिष्ठति। तथा च मत्पितुरयं खड्गस्तदा त्वया ग्राह्यः। अथ तयोरित्थं वार्तां कुर्वतोरेव स निशाचरः करे नृशवं गृहीत्वा समागतः। तत्रोपविष्टं धनदं विलोक्य स रात्रिंचरः सहास्यमिति प्राह—'अहो आश्चर्यम्! अद्य स्वयमेव मम भक्ष्यमायातम्'। इत्यवज्ञया जल्पित्वा तन्मृतकं विमुच्य स यावद्विद्यां पूजयितुं प्रवृत्तस्तदा धनदेन खड्गमाकृष्येति प्रोचे—'अरे पापात्मन् सांप्रतमहं त्वां हनिष्यामि'। इत्युक्ते सोऽप्यवज्ञया हसितुं लग्नः। तदानीं स राक्षसः पूजां कुर्वन् तेन खड्गेनाहत्य यमसदनं नीतः। ततस्तया च विवाहसामग्र्या स धनदः शुभवेलायां सुरूपां तिलकसुन्दरीं कन्यां परिणीतवान्। तदनन्तरं स तया सार्धं भोगान् भुञ्जन् कीयतो वा-

सरान् तत्रैव स्थित्वा ततः परं तां स्त्रियं तथा समग्रं रत्नसुवर्णपट्टकूलादि सारं वस्तु चादाय तत्रैव कूपके समेतः। तत्रागत्य पुनः पश्चाद्वलित्वा मनःप्रियं यत्किंञ्चिदभूत्तद्गृहीत्वा भक्तिपूर्वं देवीं चक्रेश्वरीं भूयः प्रणिपत्य यावता कूपमेखलायां समागात्तावता तद्द्वीपसन्निधौ किंचित्प्रवहणं समियाय। तदा प्रवहणस्थिता जनास्तत्रैव कूपे नीरार्थमायाताः। कूपमध्ये तै रज्जुः क्षिप्ता। धनदस्तां दवरिकां धृत्वा बभाषे—'भो जना अहं कूपे पतितोऽस्मि, मामुत्तारयत'। इति श्रुत्वा तैः स्वस्वामिने देवदत्तसार्थेशाय निगदितम्। सोऽपि सत्वरं कौतुकेन तत्रागात्। तेनागत्य वरत्रया बद्ध्वा कूपे मंचिका क्षिप्ता। ततस्तस्यां चटित्वा धनदः कूपाद्बहिर्निःसृतः। तदा सार्थेशस्तं सुन्दराकारं वस्त्राभरणभूषितं दृष्ट्वा सविस्मयमिति पप्रच्छ—'भो भद्र त्वं कः? कुत आयातः? कथमत्र कूपे पतितः?'। इति पृष्टः सोऽवदत्—"भो सार्थेश मत्प्रियाप्यत्र कूपे पतितास्ति। तां प्रियां बहिर्निष्कास्य, तथा भो देवदत्त मम रत्नालंकारादि वस्तु कूपमध्येऽस्ति, तदपि निष्कास्य, पश्चान्मदीयं समस्तस्वरूपं भवतां कथयिष्ये"। तेनेत्युक्ते सार्थपः प्राह—'भो प्रियां तथा स्वकीयं वस्तु निष्कासय'। ततस्तेन धनदेन तथा कृतम्। तदा सार्थेशस्तां तिलकसुन्दरीं निरीक्ष्य विस्मितः। भूयोऽप्यमुना पृष्टः। तदा धनदः स्ववृत्तान्तं प्रतिसमाख्यातुं प्रवृत्तः—"भो सार्थपते अहं भरतक्षेत्रवासी जात्या वणिग्वर्ते। परं धनार्जनाय सप्रियः कटाहद्वीपं प्रति प्रवहणेन चलितः। दैवयोगाद्वारिधौ प्रवहणं भग्नम्। ततः कलत्रान्वितोऽहमत्रागतः। तदनन्तरं मत्प्रिया तृषाक्रान्ता नीरं विलोकयन्ती कूपेऽपतत्। एतावताहमप्यस्याः स्नेहवशात् कूपे निपतितः। पुनर्भाग्ययोगेन कूपमेखलायामेवावां स्थितौ, न नीरमध्ये निपतितौ। तत्र जलदेवता तुष्टा रत्नालंकारादि ददौ। तथा तया देवतया इत्युक्तं 'यत्प्रवहणमत्र समेष्यति, तत्राधिरुह्य त्वं सुखेन निजस्थानं गच्छेः। एतावता भो सार्थपते मद्वार्ता मया कथिता। त्वमप्यात्मकथां कथय। यथावयोः प्रीतिर्वृद्धिमती भवति"।

इतश्च स देवदत्ताख्योऽवदत्—" अहो अहमपि भरतक्षेत्रवासी कटाहद्वीपं प्रति गत्वाथ स्वगृहं प्रचलितोऽस्मि। हे भद्र त्वमपि समागच्छ, यथा सममेवावां यावः। निजं वस्तु तथा प्रियां मम याने समारोपय"। सार्थेशेनेत्युक्ते धनदः प्राह—'एवं कुरु, भो सार्थेश गृहं गतोऽहं वस्तुनः पण्यांशं तव दास्यामि'। इति श्रुत्वा सार्थपः प्राह—'भो असारेण धनेन किं? त्वादृशानां गौरवं क्रियते, तदेव सारम्'। इति जल्पता सार्थपतिना तदीयं वस्तु याने समारोपितम्। इति कृत्वा मार्गे समागच्छतस्तस्य दुरात्मनः सार्थपस्य प्रियां धनं च निरीक्ष्य चित्तं चचाल। स द्रोहं कर्तुमुद्यतः। तदा रात्रौ यावता धनदो देहचिन्तार्थं मंचिकायां गतस्तावता सर्वेषु जनेषु सुप्तेषु प्रच्छन्नतया समुत्थाय सार्थपतिना मंचिकातः स समुद्रे निक्षिप्तः। तेन यानपतिना दूरंगतेनेत्थं प्रोक्तम्—'मम प्राणप्रियो धनदाभिधः शरीरचिन्तार्थं मंचिकायां गतोऽभूत्। सोऽद्यापि नागातस्तर्हि नूनं वारिधौ पतितः'। इति कथयन् कृत्रिमं दुःखं कुर्वन् चिरकालं स्वैर्नरैरन्वेषयामास। कुत्रापि न लब्धः। ततः परं प्रियालापैस्तत्प्रियां स आश्वासयामास। तत एकदा स सार्थपतिस्तां तिलकसुन्दरीं प्रत्यूचे—'हे भद्रे दैवयोगात्तव पतिर्मरणमापन्नः। तस्मात्कारणादथ त्वं मम पत्नी भव'। इति वचः श्रुत्वा सा बुद्धिशालिनी हृदयेऽचिन्तयत्—" नूनं मत्पतिरनेन दुरात्मना मदीयांगलुब्धेन व्यापादितः। अथैष बलादपि मम शीलविध्वंसं विधास्यति। ततः किंचिदुत्तरं कृत्वा कालक्षेपः कृतो विलोक्यते। कालविलंबेन सर्वं भव्यं भविष्यति। यत उक्तम्—

क्षणेन लभ्यते यामो यामेन लभ्यते दिनम्।
दिनेन लभ्यते कालः कालः कालो भविष्यति॥ १॥

इत्थं विमृश्य सा सार्थेशं प्रति प्रोवाच—' भो सार्थपते तव पुरं संप्राप्तस्य महीपतेरनुज्ञयाहं त्वद्गृहिणी भविष्यामि '। इत्युक्ते स प्रमुदितस्तदीयं वचनमनुमेने। तथा स्वचित्त एवं ध्यायति स्म—' पुरं गतः सन् द्रव्यप्रदानेन नृपं तोषयित्वा स्वसमीहितं करिष्ये '।

इतश्च स धनदस्तेन पापात्मना जलधेर्जले निक्षिप्तः सन् विधिवशात् पूर्वं भग्नस्य यानस्य फलकं लेभे। तत्फलकं गाढतरमुरसा संश्लिष्य कल्लोलैः क्षुभ्यमाणः पञ्चभिर्वासरैः स पुरासन्नं प्राप्तः। तदा हृष्टचित्तः सन् स्वपुरमूर्ध्वमुखीभूय दृष्ट्वा यावद्विलोकयति, तावत्फलकेन सह महता मत्स्येन गिलितः। तदा स धनदो नरकोपमे मत्स्यजठरे पतित एवं दध्यौ—' रे जीवैतत्सर्वं दैवदोषेण संजायमानमस्ति, तां गाथां विभावय '। इति ध्यात्वा स आपन्निवारकं मणिं यदा सस्मार, तदा तत्प्रभावेण स मत्स्यस्तत्र धीवरैर्गृहीतः। उपकंठे नीत्वा तस्य जठरे स्फाटिते सति तदुदरमध्ये तैर्धीवरैः सविस्मयैरसौ पुमान् दृष्टः। तदा निष्कास्य नीरेण प्रक्षाल्य महीपतेर्विज्ञप्तम्। ततो राजापि सविस्मयः स्वसमीपे तमानाय्येति पप्रच्छ—" भो भद्र किमेतदघटमानं बभूव? तथा त्वं कः? कथं मत्स्यजठरे निपतितः? सत्यं सर्वं कथय। यतो मम महत्कौतुकमस्ति "। धनदस्तदा प्राह—" अहं तावज्जात्या वणिक्। याने भग्ने फलकं संप्राप्यात्र समागतः। यावत्तटे समेत्य नगरं निरीक्षमाणो बभूव तावता मत्स्येन गिलितः। स तु मीनो धीवरैर्गृहीतः। तस्योदरं विदारितम्। तस्य मध्ये त्वहं दृष्टः। तैर्विस्मयपरैरिह भवत्पार्श्वे नीतः। हे राजन्नियं मम कथा ज्ञेया। अथ भूभुजा स्वर्णप्रक्षालननीरेण तं धनदं संस्नाप्य सुन्दराकारत्वात्स्वसन्निधौ स्थापितः। मत्स्योदर इति तस्य यथार्थं नाम चक्रे। तत्प्रार्थनया राज्ञा स स्थगीधरः कृतः। ततः स स्वस्वरूपं कथयन् दिवसान्निनाय। एतावतान्येद्युस्तस्य धनदस्य प्रथमद्रोहकारी सुदत्तनामा सार्थाधिपः पवनप्रे-

रितप्रवहणेन तत्र समाययौ । ततश्च स सुदत्तः प्राभृतं गृहीत्वा प्रतिहारनिवेदितः सन् नृपतिसमीपे समागत्य प्रणामं विधाय चोपविष्टः । राज्ञा प्रियालापैः स वणिक् स्वयमालापितः । तथा तत्समीपे कुशलादिसमाचारः पृष्टः । तथा तस्य सार्थपतेः स्थगीधरकरेण नृपेण तांबूलं प्रदापितम् । तदा धनदेन सार्थपतिरुपलक्षितः । सुदत्तोऽपि धनदं दृष्ट्वा सविस्मयो बभूव । मनसि सुदत्तेन चिन्तितम्—" पुरा यो मया सुवर्णेष्टिकारत्नादिकं गृहीत्वा शून्यद्वीपे कूपे क्षिप्तोऽभूत्, नूनमसौ तत्सदृश एव दृश्यते । अत्र स कुत आयातः ?"। इति विस्मयापन्नो राज्ञः प्रणामं कृत्वा यदा समुत्थितस्तदा नृपेण सन्तुष्टेन तस्य दानार्थं मुक्तम् । तदानीं स महाप्रसाद इत्युक्त्वा स्वस्थानं जगाम । अन्यदा स सार्थेशः कस्यचित्पुरवास्तव्यजनस्य पार्श्वे इति पप्रच्छ—'भो भद्र राज्ञोऽयं स्थगीधरः किं क्रमागतः ?' इति पृष्टे तेन स्वरूपं यथातथ्यं समाख्यातम् । तन्निशम्य सुदत्तस्य मनसि निश्चयो जातः । अत्रान्तरे राजमान्यो गीतरतिनामा मातंगगायनस्तस्य सार्थपतेः समीपे समागतः । निजवृन्दसमन्वितो गीतरतिर्गायनं कर्तुं प्रवृत्तः । तद्गीतकलया सार्थपतिरपि रञ्जितः । पश्चाद्दानेन तोषयित्वा सार्थेशस्तं मलिनगायनं प्रत्युवाच—'भो यदि त्वं मामकं कार्यमेकं करोषि, तर्हि तव प्रचुरं धनं यच्छामि'। सोऽवदत्—'यत्किंचित्कार्यं भवति, तन्ममाग्रे कथय । सत्वरमप्यहं करिष्ये । यदि मम वशे महिपालस्तर्हि किं दुष्करम् ?'। इति निगदिते सार्थपेनोक्तम्—'तर्हि त्वयैकान्ते भूभुजं प्रत्येवं वाच्यम् । यथा मत्स्योदरो मम बान्धवः'। यदा तेनेति प्रतिपन्नं, तदा तुष्टेन सार्थवाहेन तस्मै मातंगाय सुवर्णेष्टिकासंघाटकचतुष्टयं प्रददे । तद्गृहीत्वा स मातंगगायनः सभास्थितस्य राज्ञः समीपमागत्य गातुं लग्नः । तदा तद्गीतरञ्जितो राजा स्थगीधरमुवाच—'भो एतस्मै गान्धर्ववराय तांबूलं देहि'। नृपेणेत्युक्ते स धनदो यावत्तांबूलं दातुं प्रवृत्तस्तावत्स गीतरतिनामा मलिनगायनस्तस्य धनदस्य कंठे विलग्य 'हे भ्रातश्चिरेण दृष्टोऽसि' इति प्रजल्पन् गाढं रुरोद । तदीयं रुदनं

श्रुत्वा राज्ञा प्रोक्तम्—'भो धनद किमसौ कथयति?'। तदा कमप्युपायं विचिन्त्य धनदः प्राह—'राजन् सत्यमेवेदम्'। नृपेणोचे—'क-
थं सत्यम् ? '। तदा स्वधिया धनदो बभाषे—" राजन्नस्मिन्नगरे पूर्वमावयोः पिता मातंगो गीतक्रियानिपुणः प्रभूणां प्रसादपात्रं बभूव।
तस्य द्वे प्रिये अभूताम् । तयोरावां सुतौ जातौ । मम माता मनागनिष्टा, तस्मादहमपि पितुरनिष्ट एव । अस्य माता नितरां वल्लभा,
तेन वल्लभश्चायम् । तेनास्मज्जनकेन दीर्घसूत्रं विमृश्य मज्जघायां पञ्च रत्नानि क्षिप्तानि । तत्प्रहारश्च तिरोहितः । पित्रा म-
मेति भणितम्—' वत्स विषमवेलायामेतानि रत्नानि भक्षयेः ' इत्युक्त्वाहं तोषितः । अस्य विशेषवल्लभपुत्रस्य समग्रमपि शरीरं
रत्नपरिपूर्णमेवास्ति "। (इत्युक्त्वा) प्रत्ययार्थं स्वां जंघां विदार्य पूर्वसंचितं रत्नपञ्चकं भूपतेर्दर्शितम् । बहुमूल्यं रत्नपञ्चकं दृष्ट्वा राजा
चमत्कृतः । तदा राज्ञा स्वपदातीनां प्रोक्तम्—' गीतरतिशरीरं विदार्य रत्नसमुच्चयं प्रकटीकुर्वन्तु '। इत्युक्ते गीतरतिः प्राह—' भो
स्वामिन्नार्यं मद्भ्राता । इममहं नोपलक्षये। ममांगमध्ये रत्नानि न सन्ति'। इति जल्पति वराके नृपभृत्या यदा शरीरं विदारयितुमुद्यतास्तदा
तेनोक्तम्—" मया वृथा जल्पितम् । सुदत्तव्यवहारिणा सुवर्णेष्टिकाप्रदानादहं पापकर्म कारितः । हे देव यदि मद्गिरायां तव प्रती-
तिर्न भवति, तर्हि मद्गृहात्तान् सुवर्णेष्टिकासंघाटान् समानयताम् "। इति प्रोक्ते राज्ञा मत्स्योदरमुखं वीक्षितम् । तदा तेनोक्तम्—
' प्रभो इदमपि सत्यम् '। पुनर्भूपालेनोक्तम्—' भोः सत्यार्थस्वरूपं कथय '। इत्युदिते मत्स्योदरः प्राह—" भो नरेश्वरास्य वणि-
जो याने मम सपादाष्टशती स्वर्णसंघाटानां विद्यते। तथा पञ्चदश सहस्राणि निर्मलरत्नानि सन्ति। तथा ते स्वर्णसंपुटाः सर्वेऽपि प्रभा-
मांकिताः प्रवर्तन्ते । इत्यभिज्ञानं ज्ञेयम् "। तथा नृपाग्रे सर्वं स्वकीयं नामादिस्वरूपमनेन निगदितम् । तदा राज्ञा मातंगगृहाच्चत्वारो-
ऽपि ते हेमसंघाटाः समानायिताः। तदनन्तरं तेषु संघाटेषु द्विधा कृतेषु तन्मध्ये धनदनाम दृष्ट्वा राजा क्रुद्धः सन् तौ मातंगवणिजौ

मत्स्योदरेणैव कृपालुतया तौ द्वावपि हन्यमानौ मोचितौ। सोऽपि कनकनीरेण संस्नाप्य स्वा-
बधार्थं वध्यस्थाने यावत्समादिदेश, तावन्मत्स्योदरेणैव कृपालुतया तौ द्वावपि हन्यमानौ मोचितौ। सोऽपि कनकनीरेण संस्नाप्य स्वा- धनदः श्रिया धनदसमो जातः। पुनरपि
मिना शुचिः कृतः। वणिग्मातंगसमीपे यत्तद्वित्तमभूत्तत्सर्वं गृहीत्वा तयोर्युक्तशिक्षां विधाय धनदः श्रिया धनदसमो जातः। पुनरपि
भूभुजा पृष्टम्—'भोः सत्यस्वरूपं ब्रूहि'। तदा स धनदः समस्तमप्यात्मचरित्रं भूपतेरग्रे प्रोक्तवान्—"अत्र वास्तव्योऽहं रत्नसा-
रश्रेष्ठिपुत्रः। दीनारसहस्रेण गाथा गृहीता। ततः कारणात्पित्रा निर्वासितो देशान्तरे गतः"। इत्यादिसकलां वार्तां कथयित्वा पुन-
र्भूपं प्रति बभाषे—'नूनमहं हे स्वामिन्नद्यापि कस्याप्यग्रे न प्रकाश्यः। यतो मम वित्तकलत्रापहारकारी देवदत्तसार्थवाहः सोऽपि
कदाचिदत्र समायाति, तर्हि भव्यं भवति'। इत्युदित्वा नृपप्रसादमासाद्य, स धनदो यावत्तत्र सुखेन तस्थौ, तावद्भाग्ययोगतः किय-
द्भिर्वासरैः सोऽपि देवदत्तसार्थेशस्तत्रागतः। ततः सोऽप्युपायनं गृहीत्वा तिलकसुन्दर्या सह राजसभायां नृपान्तिकमाययौ। राज्ञाप्युपल-
क्षितः सन्मानादिकं विहितम्। मत्स्योदरोऽपि तं सार्थाधीशं तां नारीं दृष्ट्वा चोपलक्ष्य तदभिप्रायं ज्ञातुकामो गुप्तवृत्त्या स्थितः। तदा
भूपः ससंभ्रमः सन् सार्थपतिं जजल्प—'भो भद्र त्वं कुत आयातः? केयं बालिका?' इति पृष्टे सोऽवदत्—"राजन् कटाहद्वीपा-
दिह समेतोऽहम्। इयं बाला जलधिमध्यद्वीपे एकाकिनी मया लब्धा। सुवस्त्राहारतांबूलालंकारादिभिः सत्कृता। परंतु यदि त्वद-
नुमतं भवति, तर्हि मम पत्नी स्यात्"। इति वचः श्रुत्वा नृपस्तां बालां पृच्छति स्म—'हे बाले तव किमसौ वरो रोचते?
अथवायं बलात्कारं कर्तुकामोऽस्ति?'। इत्युक्ते सा प्राह—"अस्य पापात्मनोऽभिधानं को गृह्णाति? येन गुणमाणिक्यनिधिर्मम
भर्ता वारिधौ क्षिप्तः। अनेन दुरात्मना विषयार्थमहं प्रार्थिता। परंतु मया शीलरक्षणार्थमयं प्रत्युत्तरः कृतः। यतो राजादेशेन
तव प्रिया भविष्यामि। अनेन प्रपञ्चेनैतावत्कालं मया शीलं रक्षितम्। अधुना तु वह्नौ प्रवेशं करिष्यामि"। इत्युक्ते भूभुजा

भणितम्—'हे जडे मृत्युसाहसं मा कार्षीः। यतोऽहं तव परिणीतं पतिं दर्शयिष्यामि'। तदानीं सा प्रोचे—'तव परिहासः कर्तुं न समुचितः। स मत्पतिः कुतः समेति, यः सार्थेशेन वारिधौ क्षिप्तः'। तदनन्तरं राज्ञा तांबूलदानार्थं धनदमुत्थाप्य प्रोचे—'हे सुन्दरि त्वं स्वभर्तारं दृष्ट्या विलोकय'। इति गदिते यावता सा तिलकसुन्दरी तं धनदं समालोक्यासंभाव्यसमागमत्वात्सविस्मया बभूव, तावता धनदः प्राह—"हे स्वामिन्नस्याः स पतिर्भविष्यति। यः शून्यागारे कुतोऽप्यागतः। अनया राक्षसविघाताय यस्य पुरुषस्य खड्गः समर्पितः। तथा येन राक्षसो हतः। स्नेहवती त्वियं बाला येन परिणीता"। इत्यादिसर्ववृत्तान्ते मूलतः कथिते सा सहर्षा बभूव। तदनन्तरं नृपादेशेन सा मत्स्योदरस्यैव जाया जाता। तथा सार्थेशो राज्ञा मार्यमाणः कृपालुतया तेनैव धनदेन मोचितः। सर्वमप्यलंकरणादिमनोहरवस्तु यद्वाणिजागृहीतं तत्सर्वं भूपतेर्दर्शयामास।

इतश्च स धनदोऽन्येद्युर्वसुधाधिपमनुज्ञाप्य बहुना परिवारेण सह पितृमन्दिरं ययौ। तदा रत्नसारः श्रेष्ठी तं राजमान्यं स्वगृहे समागतं निरीक्ष्यासनादिस्वागतक्रियां विधायैवं व्याजहार—"अहं धन्यः। तथा मामकीनं गृहमपि धन्यं, यत्त्वं नृपवल्लभो गृहे समेतः। यत्किंचित्कार्यमस्ति, तत्कथय। मम मन्दिरे सर्वमपि त्वदीयमस्ति"। इत्युक्ते धनदेनोक्तम्—'तात सर्वमेतत्सत्यमेव वदसि। परंतु यदहं पृच्छामि तत्कथय। हे श्रेष्ठिन् यस्ते धनदनामा पुत्रोऽभूत्, सांप्रतं स क्व गतः? तस्य शुद्धिं जानासि? असौ क्वापि विद्यते न वा?" तदा श्रेष्ठिना तस्येति वचः श्रुत्वा तं सुतसदृशमेव विलोक्य सविचारतया पुत्रवृत्तान्तो निवेदितः—'एकदा तेन सुतेन दीनारसहस्रेणैका गाथा गृहीता। तदा मया रोषात्किमपि कठोरं वचः प्रोक्तम्। तदा स तेन वचसा दूनः सञ्जाताभिमानवशतो गृहान्निःसृत्य क्वापि गतः। घनतरः कालोऽभूत्। ततः शुद्धिरपि तस्य क्वापि न लब्धा। अहमेवं मन्ये आकृत्या वचसा त्वं स एव

ततस्त्वमपि मत्पुत्रसदृशो भविष्यसि'
भवसि । परंतु त्वयि गोपयति मम मनसि संशयो जायते । भूतले सदृशा बहवो लोका भवन्ति । ततस्त्वमपि मत्पुत्रसदृशो भविष्यसि'
। इत्युदिते धनदः प्राह—' हे तात स एवाहं त्वत्पुत्रः' । तदा श्रेष्ठिनापि दक्षिणचरणे चिह्नं निरीक्ष्य नितरां स समुपलक्षितः ।
ततश्च स विनयवान् पितुः पादौ ननाम । सोऽपि श्रेष्ठी तं प्रणयवशाद्गाढतरमालिंग्य हर्षाश्रुपूरितेक्षणं सगद्गदं प्रोवाच—'हे पुत्र त्वया-
गतेनापि स्वं न प्रकटितम् । किं ते बहुभिर्वासरैरपि पित्रोर्मिलनाय सपुत्कंठा नाभूत् । हे वत्स त्वमियत्कालं क्व स्थितः ? दे-
शान्तरगतेन त्वया किं किं सुखं दुःखं चानुभूतम् ' । जनकेनेति पृष्टे धनदोऽपि साश्रुलोचनः संक्षेपेण स्ववृत्तान्तं पित्रोर्निवेदयामास ।
तया च पितरौ क्षमयति स्म । ततश्च धनदेन पितुरित्युक्तम् ' तात मां पार्थिवाद्विमोचय । यथाहं सवधूकः स्वमन्दिरं समागच्छामि' ।
इति श्रुत्वा स रत्नसारश्रेष्ठी प्रमुदितो राजकुले गत्वा पुत्रेण सह भोजनाय राजानमाकारयामास । तदनन्तरं गजेन्द्रारूढो धनदः प्रिया-
युक्तो राज्ञा समन्वितो महोत्सवैः सह स्वमन्दिरं समेतः । तदा रत्नसारश्रेष्ठी पुत्रे देशान्तरादायाते भूपतौ गृहप्राप्ते महार्पितः सन् गरी-
यांसं महोत्सवं व्यधात् । अत्रान्तरे नृपसुतो नृपोत्संगे स्थितो रममाणोऽस्ति । तावत्कश्चिदारामिकः स्वकरंडकात् कुसुमानि राज्ञे
समार्पयत् । तदा नृपोत्संगस्थेन पुत्रेण तानि कुसुमानि स्वहस्ते गृहीत्वा यावता घ्राणे दत्तानि, तावता तन्मध्यस्थेन सूक्ष्मशरीरेण
राजसर्पेण स नासिकाग्रे दष्टः । ततो भृशं रुरोद—' अहं दष्टः । ' ततो राज्ञा पुष्पाणि शोधितानि । तन्मध्य इलिकातुल्यो राजसर्पो
दृष्टः । तं दृष्ट्वा राजा सुदुःखितः सन् प्राह—'भो गारुडिकानाकारयत ' । तत्कालमेव गारुडिनः समानीताः । तैर्दंशादिकं विलोक्ये-
त्यमुक्तम्—' अयं राजसर्पः सर्वसर्पशिरोमणिः । एतद्विषं विषमम् । अनेन दष्टस्य मंत्रादिक्रियाः कृता अपि विफला भवन्ति ' ।
इत्युक्ते राजा चिन्तामपन्नो जातः । पुत्रो विषार्तः सन् विगतचेतनः संजातोऽस्ति । एतावता धनदो देवीचक्रेश्वरीप्रदत्तमणिनी-

दिह भवे त्वया दुःखमिश्राणि सुखानि लब्धानि "।

इति निशम्य स धनदो मूर्छितः क्षणमात्रं पृथ्व्यां पपात । जातिस्मृत्या पूर्वभवस्वरूपं ददर्श । तद् दृष्ट्वा गुरूणामिदमुक्तम्—' हे प्रभो यद्युष्माभिर्निगदितं तत्सत्यमेव । बन्धूननुज्ञाप्याथाहं व्रतं गृहीष्यामि ' । इत्युक्त्वा गृहे गत्वा पित्रोरिति निवेदितम्—'हे तात हे मातर्युवां मम दीक्षाकृते विसृजतम्'। इत्युक्ते जनन्या जनकेन च स बाढं निवारितः परंतु न विरराम, तदा ताभ्यामुक्तम्—' वत्स यदि त्वं व्रतं गृहीष्यसि, तर्ह्यावामपि त्वया सह दीक्षां गृहीष्यावः ' । इति पित्रोर्वचः श्रुत्वा स धनदो यावता नृपपार्श्वे गत्वा स्वाभिप्रायं शशंस, तावता नृपोऽप्यूचे—' अहमपि त्वया सह व्रतमादास्ये ' । इत्युक्ते धनदः प्राह—' हे नाथ गृहस्थत्वे त्वं मम स्वामी बभूव, यदि यतित्वेऽपि मम स्वामी भविष्यसि, तर्हि किं विलोक्यते ' । तदनन्तरं राज्ञा कनकप्रभनामा स्वसुतो राज्ये निवेशितः । धनदसुतो धनावहनामा श्रेष्ठिपदे संस्थापितः । ततश्च स धनदो महीपतिना पितृभ्यां भार्यया च सह गुरुसमीपे दीक्षां जग्राह । तदनन्तरं ते सर्वेऽपि तपः कृत्वा शुद्धं व्रतं प्रतिपाल्य शुभध्यानेन मृत्वा सुरालयं जग्मुः । ततश्च्युत्वा महाविदेहक्षेत्रे मनुष्यत्वं प्राप्य श्रामण्यं लब्ध्वा ते सर्वेऽपि परमं पदं संप्राप्ताः ॥ इति मत्स्योदरकुमारस्य कथानकम् ॥

मुनिनोक्तम्—" भो विद्याधरेन्द्रेमां धनदस्य कथां श्रुत्वा त्वया निरन्तरं निष्कलंक एव धर्मः कार्यः " । इत्युपदेशं श्रुत्वामिततेजा नृपो गुर्वाज्ञां शिरसाऽदधत् । तयोर्मुनिप्रवरयोः पादौ ननाम । तदनन्तरं तौ चारणश्रमणमुनी नभसोत्पत्यान्यत्र गतौ । ततः श्रीविजयामिततेजसौ भूचरखेचरस्वामिनौ धर्मकर्मतत्परौ कालं गमयतः । तथा तौ द्वावपि पुण्यात्मानौ प्रतिवत्सरं यात्रात्रयं विदधतुः । तन्मध्ये यात्राद्वयं शाश्वततीर्थानामेका त्वशाश्वततीर्थस्य । चैत्रस्य शुक्लपक्ष एका शाश्वती द्वितीया चाश्विने मासेऽष्टाह्निका-

रप्रभावेण राजपुत्रं निर्विषं चकार । तदा तत्कालमेव राजा मुमुदे । ततश्च तं धनदं सत्कृत्य स्वसदनं समेत्य राजा पुत्रजन्मवर्धापनं च-क्रे, दीनादिभ्यो दानं ददौ ।

अथ स नृपांगजः क्रमेण प्रवर्धमानो यौवनं प्राप । एकदा गजमारुह्य कुमारो राजवाटिकायां निर्गतः । पुरश्रोच्चां वि-लोकयता तेन कुमारेण सूरराजस्य तनया श्रीषेणा नाम कन्यका दृष्टा । कुमारो मदनातुरोऽभूत् । सा कन्या तं कुमारं विलोक्य न स्व-रूपमप्यनुरागं दधौ । कुमारो मदनज्वरपीडितः स्वमन्दिरे प्राप्तः परमरतिं न याति । तदा कुमारमंत्रिभिः कुमाराभिप्रायो राज्ञोऽग्रे नि-वेदितः । राज्ञा तमभिप्रायं ज्ञात्वा कोऽपि बुद्धिमान्मंत्री सूरनृपान्तिके कुमारार्थं तां श्रीषेणाभिधां कन्यां याचितुं समादिष्टः । तदा स सूरनृपस्तं समाचारं श्रुत्वा यावत्प्रहर्षितस्तस्य मंत्रिणो गौरवं चकार, तावत्सा बालिका प्रोचे—'यदि यूयं तस्मै कुमाराय मां दा-स्यथ, तर्हि नूनमहमात्महत्यां करिष्यामि'। इति कन्यावचः श्रुत्वा सूरः सुतरां विषादमापन्नः । तथा सचिवस्य सूरनृप इति प्रो-क्तवान्—'सांप्रतं तावद्यूयं यात, अहमेतां कन्यामनुनीय पुनः कथयिष्यामि'। इत्युक्ते मंत्री पश्चादागत्य सर्वमपि समाचारं राज्ञो-ऽग्रे बभाषे । सूरेण बहुधापि तस्यै कन्यायै प्रोक्तं, परंतु सा वरं नेच्छति स्म । स वृत्तान्तस्तेन सूरेण पार्थिवस्य निवेदितः । पार्थिवेन पुत्रस्य प्रोक्तम् । तदनन्तरं राजपुत्रो गाढं मदनातुरो बभूव । अत्रान्तरे धनदो नृपसमीपे समागत्येति प्रश्नं व्यधात्—'हे स्वामिन् यूयं कथं चिन्तातुराः'। इत्युक्ते राजापि सुतस्वरूपं निजगाद । तदा धनदः प्राह—'राजन् विषादो न कार्यः'। इति निगद्य देवीचक्रेश्वरीदत्तमणिमेकं समानीय धनदो राजपुत्राय ददौ । तदा स राजसूनुर्धनदप्रोक्तविधिना यावता तं मणिमाराधयामास, ताव-ता स मणिस्तुष्टः । तत्प्रभावेण सा सूरपुत्री तस्मिन्नृपनन्दनेऽनुरागं दधौ । तया स्वकीयसख्याः अनुरागस्वरूपं ज्ञापितम् । तया च

जन् तत्कथां सावधानतया शृणु'। ततः सुधामधुरया गिरा मुनिराख्यातुं प्रवृत्तः—

## ॥ अथ मित्रानन्दकुमारस्य कथा ॥

इहैव भरतक्षेत्रे महर्द्ध्या सुरपुरीसमानं भुवि ख्यातममरतिलकं नाम पुरमस्ति। तत्र मकरध्वजो नाम नृपतिरासीत्। तत्पत्नी मदनसेनाख्या। तदीयकुक्षिसंभवः पद्मसरःस्वप्नसूचितः पद्मकेसरनामा पुत्रोऽभूत्। एकदा मदनसेना राज्ञी नृपशिरसि केशान् विवृण्वन्ती पलितं दृष्ट्वा राजानमिति बभाषे—'हे स्वामिन् दूतः समागतः'। ततः स संभ्रान्तचित्तेन राजा दिशो विलोकयितुं लग्नः। परंतु न क्वापि दूतं पश्यति। तदा भार्यासमीपे पृष्टम्—'प्रिये क्व दूतः?' तदानीं तया श्वेतचिकुरः प्रदर्शितः "धर्मराजेन जरासमागमं ज्ञापयितुं पलितच्छलादेष दूतः प्रेषितोऽस्ति, किमपि धर्मकृत्यं विधीयताम्"। इत्युक्ते सविस्मयः सन् स नृप इति चिन्तयामास—"मम पूर्वजैः पलितेऽदृष्टे धर्मसेवा विहिता। राज्यलुब्धं स्थितिविच्छेदकारिणं मां धिक्। यतो मम विषयासक्ततया-जरागमः संजातः"। इति चिन्तापरं पतिं दृष्ट्वा पुनः सहास्यतया राज्ञी तदभिप्रायमजानती प्रोचे—"हे नाथ यदि त्वं वृद्धभावेन लज्जसे, तदाहं पुरमध्य इमां पटहोद्घोषणां कारयिष्यामि यः कश्चिन्नरेन्द्रं वृद्धं जरद्गवं ( जरन् जीर्णो गौर्बलीवर्दस्तम् ) वदिष्यति, स यमसदनमकाले प्राप्स्यति"। नृपभार्ययेतिगदिते राजा प्राह—"हे प्रिये ईदृशं निर्विवेकवाक्यं किं वदसि? नूनमस्मादृशां जरैव मण्डनं, तया जरया कथं लज्यते?"। नृपवचः श्रुत्वा राज्ञी प्राह—'हे नाथ पलितदर्शनात्तर्हि यूयं श्यामवदनाः कथं जाताः?' तयेत्युक्ते नृपेण तस्या अग्रे स्वकीयं वैराग्यकारणमुक्तम्। तदनन्तरं स भूपतिः स्वसुतं राज्ये संस्थाप्य प्रियया सहितस्तापसीं दीक्षां गृहीत्वा वनवासं शिश्राय। परंतु सा राज्ञी व्रतं प्रपन्ना, तदा गूढगर्भतया गर्भस्वरूपं केनापि न ज्ञातम्। क्रमेण

त्रिधा यात्रा । देवविद्याधराश्चैत्राश्विनयात्रां नन्दीश्वरे कुर्वन्ति, अपरे नराः स्वस्वस्थानतीर्थेषु यात्रां कुर्वन्ति । तौ च भूचरखेचराधिपौ तृतीयां यात्रां वज्रनन्दकेवलोत्पत्तिस्थाने सीमनगे श्रीनाभेयजिनप्रासादे कुरुतः । अनेन विधिना बहूनि वर्षसहस्राणि तौ द्वावपि राज्यं कुर्वाणौ एकदा मेरुगिरौ शाश्वतजिनान्नन्तुं जग्मतुः । तत्र जिनान्नत्वा नन्दनाख्ये वने उभौ विपुलमतिमहामतिनामानौ चारणश्रमणमुनी उपविष्टावपश्यताम् । तौ नत्वा तद्देशनां श्रुत्वा ताभ्यां श्रीविजयामिततेजोभ्यां तत्समीप इति पृष्टम्—'भो भगवन्तावावयोः कियदायुर्वर्तते ? तत्कथ्यताम्'। इति पृष्टे साधुभ्यामुक्तम्—'भोः षड्विंशतिदिनानि युष्मदायुःशेषं विद्यते'। इत्युक्ते तौ व्याकुलीभूतावेवमूचतुः—'आवाभ्यां विषयलोलुपतये यत्कालं व्रतं नादत्तम्। हा हा सांप्रतं स्वल्पायुषौ सन्तौ किं करिष्यावः?'। एवं तौ शोचयन्तौ दृष्ट्वा मुनिभ्यां प्रोक्तम्—'अहो अद्यापि युवयोर्न किमपि विनष्टमस्ति। स्वर्गापवर्गदं संयमं गृहीत्वात्मकार्यं कुरुताम्'। इत्युक्ते तौ द्वावपि स्वस्वपुरं प्राप्तौ सन्तौ पुत्रौ राज्ये निवेश्याभिनन्दनमुनिसमीपे दीक्षां गृहीत्वा पादपोपगमनानशनेन स्थितौ। तन्मध्ये श्रीविजयमुनिना दुष्करं तपः साधयता स्वजनकस्य त्रिपृष्ठवासुदेवस्य तेजः संस्मृतम्। तदनन्तरं तेनेदृशं निदानं कृतम्—'अनेन दुष्करतपःप्रभावेणाहमपि तेजसा पितृसमो भूयासम्'। एवं श्रीविजयो निदानं कृत्वा, पुनरमिततेजसो जीवो निदानप्रकृत्ना आयुःक्षये मृत्वा तौ द्वावपि प्राणते कल्पे महर्द्धिकौ सुरौ संजातौ। अमिततेजसो जीवो नन्दिकावर्तविमाने दिव्यचन्द्रनाम्ना सुरो जातः। अपरः श्रीविजयजीवः स्वस्तिकावर्तविमाने मणिचूलनामा सुरः संजज्ञे। तत्र स्थितौ द्वावपि सुरौ मनसैव दिव्यं वैषयसुखं भुञ्जानौ नन्दीश्वरादितीर्थेषु यात्रां कुर्वाणौ देवार्चनस्नात्रादिधर्मकर्मतत्परौ सन्तौ स्वसम्यक्त्वरत्नं शुभभावेन नितरां निर्मलं चक्रतुः॥

॥ इत्याचार्यश्रीअजितप्रभसूरिविरचिते श्रीशान्तिनाथचरित्रे गद्यबन्धे चतुर्थपञ्चमभववर्णनो नाम द्वितीयः प्रस्तावः ॥

राज्ञोऽन्तःपुरमध्ये ईदृशी वाणी प्रकटीबभूव—'भो लोका धावत यया हि मंत्रिपुत्रः सुबुद्धिनामा राजपुत्र्या वेणीदण्डं छित्वा क्वापि ययौ' इति वचः श्रुत्वा नृपोऽपि कुपितः सन् दध्यौ—'स मंत्रिसुतो दुरात्मा गाढं सन्मानित ईदृशं निष्ठुरं कर्म व्यधात्'। इति विचिन्त्य राज्ञा राजारामकं तत्रारक्षकाणां नराणां समादिष्टम्—"अस्य पुत्रस्यापराधेन सकुटुम्बोऽपि सचिवो हन्तव्यः। कर्मकार्येपि न रक्षणीयः। अस्य सुतेन महानपराधः कृतः" इति वदन्मंत्रिगृहे स राजा सन्नद्धसैन्यं प्रैषीत्। तदाऽमात्यसुभटैस्तत्सैन्यं रुद्धम्। तथा सचिवेन ध्याननिविष्टेन सर्वोऽपि समाचारो जनमुखाच्छुश्रुवे। तदा मंत्रिणा समुत्थाय निजान् पदातीन्निवार्य राजसैनिकानेवं प्रोक्तम्—"भो एकवारं मां नृपपार्श्वे नयत'। तैस्तथा कृतम्। तदा कोपाद्राजा पराङ्मुखो जातः। पुनरपि मंत्रिणा तत्राभिमुखं गत्वा नृपं नत्वेति विज्ञप्तम्—'राजन् या मञ्जूषा मुक्तास्ति, सा विलोक्यताम्। तन्मध्यगतं वस्तु गृहीत्वा पश्चाद्यद्रोचते तत्कार्यम्'। तदा राजा स्माह—'भो ईदृशमपराधं विधाय द्रव्यदानेन मां तोषयितुमिच्छसि?'। तदा मंत्रिणोक्तम्—'राजन्मम प्राणा अपि त्वदायत्ताः सन्ति। परमेकवारं मञ्जूषा विलोक्यताम्'। ततस्तदाग्रहेण भूभुजा मञ्जूषातालकानि सर्वाण्युद्घाटितानि। तदा मञ्जूषामध्ये मंत्रिपुत्रं सुबुद्धिं वामकरगृहीतवेणीदण्डं क्षुरिकायुतदक्षिणकरं बद्धचरणमेवंविधं दृष्ट्वा राजा सविस्मयः सन् सचिवसमीपे प्रपच्छ—'एतत्किम्?'। सचिवेनोक्तम्—'राजन् किमप्यहं न जाने, त्वमेव जानासि। परमार्थमविज्ञायाजन्मसेवकस्य मम मूलोच्छेदमपि कर्तुमुद्यतोऽसि। मञ्जूषा मया त्वत्समक्षं त्वद्गृहे मुक्ताभूत्। तन्मध्य ईदृश प्रकटीबभूव। तदस्माकं किं कथयसि?"। इत्युक्ते सलज्जो राजा प्राह—'मंत्रिन्मम परमार्थं कथय'। इत्युक्तो मंत्री बभाषे—"स्वामिन्निति संभाव्यते, केनापि दुष्टेन प्रचण्डव्यन्तरादिना निर्दोषस्यापि मत्पुत्रस्य दोष उत्पादितः। अन्यथैवं मञ्जूषायां गोपितस्येदृश्यवस्था कथं स्यात्?"। तदनन्तरं नृपस्तुष्टः स-

तदनन्तरं सा तापसी-
गर्भवृद्धिर्बभूव । तदा ( राज्ञा ) पृष्टं 'किमेतदिति'। ततस्तया चतुरया कुलपतेरग्रे सर्वं यथातथं प्रोक्तम् ।
ज्ञिः परिपाल्यमाना क्रमेण शुभलक्षणं सुरूपं पुत्रं सुषुवे । इतश्च दैवयोगेन तस्या अयोग्याहारयोगाच्छरीरे निष्ठुरा व्याधिव्यथा समु-
त्पन्ना । तपोवने भैषज्यपथ्यादिशुश्रूषा तादृशी न भवति । अतः कारणात्सर्वेऽपि तापसाश्चिन्तामापन्ना बभूवुः । 'जननीं विना गृह-
स्थानामपि बालप्रतिपालना दुष्करा भवति, तर्हि मातरि विपन्नायां तपस्विभिरयं शिशुः कथं प्रतिपाल्यः ?' इति चिन्तां कुर्वन्तः स-
न्ति । एतावतोज्जयिन्या एको वणिग्देवधराख्यो वाणिज्येन परिभ्रमंस्तत्र समाययौ । स तापसकुलपतिप्रमुखतापसान् वन्दितुं तपोवने गतः । तदा
तेन सर्वांस्तपस्विनः सचिन्तान् दृष्ट्वा चिन्ताकारणं पृष्टम् । तदानीं कुलपतिरुवाच—'भो देवधर यद्यपत्यदुःखेन त्वं दूयसे तर्ह्ययं बालकं
गृहाण'। ततस्तेन कुलपतिदत्तं शिशुं गृहीत्वा देवसेनाभिधानायाः स्वभार्यायाः ( सः ) समर्पितः । तया पूर्वं सुता प्रसूतास्ति । सापि
लक्ष्मी वर्तते । १। मदनसेना पुत्रमाता सुतं स्थानगतं विलोक्य मनसि समाधिपरा सती तया रोगपीडया विपन्ना । अथ श्रेष्ठिना देव-
धरेण स्वगृहगतेन महोत्सवपूर्वकं तस्य पुत्रस्य सागरदत्त इति नाम विनिर्मितम् । पुत्र्याः सुरसुन्दरीत्याख्या कृता । तदा लोकश्रुतिरीदृशी
जाता—'देवधरभार्ययाऽपत्ययुगलं प्रसूतम्'।

इतश्चोज्जयिन्यामेव सागरश्रेष्ठिनः सुतो शिवश्रीकुक्षिसंभूतो मित्रानन्दनामा तस्यामरदत्तस्य सुहृत्संजज्ञे । परस्परं लोचनद्व-
यमिव निर्विकारा प्रीतिर्जाता। एकदा वर्षाकाले तौ सावग्धमरदत्तमित्रानन्दौ सिप्रानदीतटे पट्टकसमीपे उन्नतिकाक्रीडया[1] क्रीडितुं लग्नौ
। तदामरदत्तेनोन्नतिका प्रणुन्ना[2] । तदा दैववशाद्वटे बद्धस्य चौरशवस्य मुखान्तरा प्रविष्टा । तदानीं मित्रानन्दो हसन् बभाषे—'भो

१ उन्नतिका क्रीडनार्थं काष्ठगुटिका भाषाया 'मोई' २ उ 'मुच्छालितात पाठान्तरम

न्दः सन्ध्यासमये उज्जयिन्यां गतः। तत्र प्रतोलीमध्ये सुरदेवताप्रासादे यावद्गत्वोपविष्टः, पुरीमध्ये तावत्स ईदृशीं पटहोद्घोषणां शु- श्राव—' यः पुमान् रात्रेश्चतुरो यामानिदं मृतकं रक्षति, तस्मा ईश्वरो व्यवहारी दीनारसहस्रं ददाति '। तदा मित्रानन्देनैवं श्रुत्वा प्रतिहारपार्श्वे पृष्टम्—' एकरात्रिकृतेऽयं व्यवहारी प्रभूतं धनं ददाति, तत्किं कारणम् ? '। तदा स दौवारिकः प्राह—" भो इयं पुरी सांप्रतं मारीपराभूतास्ति। श्रेष्ठिगृहे मारीदोषेण कोऽपि मृतोऽस्ति। तच्छवं नियते। एतावता रविरस्तमितः। पुरप्रतोल्यः पि- हिताः। मारीहतं शवं रात्रौ कोऽपि रक्षितुं न समर्थः। अतः कारणादेतदर्थे प्रचुरं धनं प्रदीयते "। इति श्रुत्वा मित्रानन्देन चि- न्तितम्—' धनहीनानां कार्यसिद्धयो न भवन्ति '। इति विचिन्त्य साहसं धृत्वा धनलोभेन तच्छवरक्षणं मित्रानन्देन प्रतिपन्नम्। तत ईश्वरव्यवहारी प्रजल्पितधनार्धं मित्रानन्दस्य दत्वा शवरक्षार्थं तं मुक्त्वा ' शेषं प्रभाते धनं दास्यामि ' इत्युक्त्वा स्वगृहे गतः। ततश्च स मित्रानन्दश्चत्वरे शवं गृहीत्वा यावत्सावधानः सन् तत्र रात्रौ रक्षति, तावच्छाकिनीभूतवेतालाः प्रकटीभूता उपसर्गपरंपरां कर्तुं लग्नाः। तेन धीरत्वेन यामिन्यतिक्रान्ता। शवरक्षणं कृतम्। प्रभाते स्वजनलोकैस्तच्छवं प्रज्वालितम्। शेषं भाटकं मित्रान- न्दो याचते स्म। परं ते न ददति। तदा मित्रानन्देनोक्तम्—' यदि महासेनो राजात्र चाविशति, तर्हि मदीयं धनं चटिष्यति ' इति गदित्वा स हट्टश्रेण्यां गत्वा दीनारशतेन चारुवस्त्राणि गृहीत्वोद्भटं वेषं विधाय वसन्ततिलकावेश्यागृहे गतो। तदानीं तयाभ्युत्थाना- दिसत्कारो विहितः। तदा मित्रानन्देन दीनारशतचतुष्टयं तस्या गणिकाया दत्तम्। तदानीं साऽक्का हर्षिता सती स्वसुतायाः कथया- मास—" अयं पुमांस्त्वयाऽत्यन्तमावर्जनीयः। एकमुष्टया बहु धनं दत्तवान्। धनं किं कथ्यते ? असौ कन्दर्पसदृशोऽस्ति "। त- दनन्तरं सा स्वयमेव तस्य स्नानादिक्रियां चक्रे। प्रदोषसमयेऽपूर्वशय्यायां प्रवरशृङ्गारधारिणी रूपश्रिया देवाङ्गनायमाना सा वसन्तति-

पुत्रस्य सचिवस्य पश्चाद्गप्रसादमकरोत् । ततः पुनरपि राज्ञा पृष्टम्—'भो मंत्रिंस्त्वयैतत्कथं ज्ञातम् ?' । इत्युक्ते मंत्रिणा प्रोचे—"राजन्मया नैमित्तिकपार्श्वे पृष्टं 'मम कष्टं कुतो भविष्यति ?' तदा निमित्तज्ञेन कथितं 'तव ज्येष्ठपुत्रात्' इत्युक्ते मया तस्यैव यत्नः कृतः । परंतु श्रीजिनोक्तधर्मप्रभावेण समस्तविघ्नोपशान्तिर्जाता" । इतश्च वैराग्ये समुत्पन्ने नृपेण मंत्रिणा च स्वं स्वं तनयं स्वस्वपदे संस्थाप्य, संयमं गृहीत्वा दुष्करं तपः कृत्वा सुगतिः प्राप्ता ॥

॥ इति ज्ञानगर्भमंत्रिकथानकम् ॥

हे मित्र तेन मंत्रिणा यथा पराक्रमेण यत्नविधानेन च विपद्विलयं नीता, आवाभ्यां तथैव करिष्यते त्वं विषादं त्यज" । इति गदिते सति मित्रानन्दः प्राह—'हे मित्र ब्रूहि, किं करिष्यते' । इति प्रोक्ते तेनोक्तम्—'इदं स्वस्थानं त्यक्त्वा देशान्तरे गमिष्यावः' । तदा मित्रानन्देन स्वमित्रचित्तपरीक्षार्थं पुनरित्यूचे—"बाढं तव दुष्करं भविष्यति । त्वं सुकुमालशरीरः मम शवभाषितं कष्टस्वरूपं कालेन भविष्यति । परंतु सुकुमालत्वात्तव देशान्तरक्लेशेन सांप्रतमेव मरणं भविष्यति" । इत्युक्तेऽमरदत्तः प्राह—'घनं किं कथ्यते ? मया सौख्यमसौख्यं त्वया सह भोक्तव्यम्' । इत्युक्ते तौ द्वावपि परस्परमेकचित्तौ जातौ । तदनन्तरं तौ संकेतं कृत्वा गृहान्निःसृत्य क्रमेण पाटलीपुरपत्तनं जग्मतुः । तत्र नगरे नन्दनोपमे बाह्योद्याने भुजंगमाकारवेष्टितं ध्वजश्रेणिशोभितं प्रवरं प्रासादमेकं ददृशतुः । ततस्तौ द्वावपि सविस्मयौ सन्तौ पुष्करिणीजले सुस्नाङ्घ्रिकरादि गत्वा मध्ये प्रविश्य तं प्रासादं विलोकयितुं लग्नौ । तदामरदत्तेन तत्रैका पुत्तलिका दृष्टा । परं सा रूपलावण्येन देवाङ्गनासदृशास्ति ।

मया नश्यन्ती दक्षिणोरौ क्षुरिकया हता । तदीयं कटकं मम करे स्थितम् । अत्रान्तरे सूर्योदयः सञ्जातः " इति साश्चर्यं वचः श्रुत्वा राजा तं मित्रानन्दं प्राह—' भो वीरपुरुष यत्त्वया मारीहस्तात्कटकं गृहीतं, तन्मम दर्शय ' । इत्युक्ते तत्क्षणमेव परिधानवस्त्रग्रन्थिमध्यादाकृष्य तेन नृपकरे तत्प्रदत्तम् । तदा तत्कटकं निजनामाङ्कितं विलोक्य राज्ञा चिन्तितम्—' किं मम पुत्रिकैव मारी विद्यते ? यत इदं हि तस्या हस्तभूषणम् इति ध्यायन् देहचिन्तामिषेण राजा ततः समुत्थाय कन्यामन्दिरे गतः । तदा कन्यां सुप्तां दृष्ट्वा तदीयं वामकरं कटकरहितं दृष्ट्वा तथा व्रणस्थाने पट्टबन्धं निरीक्ष्य राजा वज्राहत इव बभूव—" हा हा मम निर्मलो वंशोऽनया दुष्टकन्यया कलंकितः । अथ केनाप्युपायेन सकालेऽप्यस्या ( सत्वरं ) निग्रहः कार्यः । अन्यथैषा समग्रमपि पुरीलोकं मारयिष्यति " । इति विचिन्त्य पश्चाद्वलित्वा नृपतिर्मित्रानन्दसमीपे इति पप्रच्छ—' भो भद्र त्वया मृतकं साहसेन रक्षितमथवा तव कापि मंत्रशक्तिरस्ति ? ' । इति कथितेऽसौ प्राह—' राजन् कुलक्रमागतो मंत्रोऽप्यस्ति ' । इति वाक्यमाकर्ण्य नृपेण तत्र निर्जनं कृत्वा तं मित्रानन्दं प्रतीति समाख्यातम्—" भो भद्र मत्सुतैव मारी विद्यते । न चात्र सन्देहोऽस्ति । अतः कारणात्त्वं मंत्रशक्त्या तस्या निग्रहं कुरु " । तदा मित्रानन्दः प्राह—' हे देवेदं न घटते, यत्त्वदीयकुले समुत्पन्ना कुमारी मारी कथं स्यात् ' ? । इत्युक्ते भूपः प्राह—' भो अत्राघटमानं किम् ? जलदसम्भवा विद्युत् किं प्राणहारी न स्यात् ? ' । तदा मित्रानन्दः पुनरप्यवदत्—' राजंस्तर्हि मम दर्श्यताम् । यथाहं तां दृष्ट्या विलोक्य साध्यं वाऽसाध्यं वेद्मि ' । इत्युक्ते राज्ञा भणितम्—' तत्र गत्वा विलोकय' । नृपादेशेन तत्र जगाम । तदा कुमारी सुप्तोत्थिता सती तं समागच्छन्तं निरीक्ष्य स्वमानस इति दध्यौ—" अयं स पुमान्, येन मम कटकं हृतं तया दक्षिणोरौ क्षुरिकाप्रहारो दत्तः । परंतु निःशंकस्तर्हि समागच्छन्नस्ति यदि राज्ञानुज्ञातोऽस्ति" । इति विमृश्य तयासनं द-

लग्ना वेश्या विषयलालसा सती मित्रानन्दसमीपे समुपागता । मधुरवाण्या प्रजल्पितुं लग्ना । तदा मित्रानन्देन स्वचित्ते चिन्तितम्—'विषयलोलुपानां देहिनां नूनं कार्याणि न सिध्यन्ति' । इति ध्यात्वा स तां प्रोवाच—'हे भद्रेऽहं काञ्चित्स्मरणां करिष्यामि, चतुष्कपट्टं समानय' । इत्युक्ते तया हेममयः पट्टः क्षणात्समानीतः । स तत्रोपविश्य दृढं पद्मासनं कृत्वा वस्त्रेण शरीरमाच्छाद्य धूर्तत्वेन स्थितः । एतावता प्रथम यामे गते तया सुरतक्रीडार्थमभ्यर्थितः । परंतु स न जजल्प । मौनं कृत्वा तथाध्याने योगीन्द्रवत् स्थितः । एवं ध्यानपरस्य तस्य सकलापि निशा गता । प्रभाते जाते स समुत्थाय देहचिन्तार्थं गतः । इतो गणिकया तदीयं समस्तमपि निशास्वरूपमक्काग्रे निवेदितम् । तदा कुट्टिनी प्राह—'यथा करोति तथा करोतु, परंतु त्वयासौ भव्ययुक्त्याश्रयणीयः' । इत्युक्ते तया तथा कृतम् । तदनन्तरं द्वितीयापि निशा तथैव तेन व्यतिक्रान्ता । तदा कुट्टिनी रुष्टा सती तं प्रति सोपालम्भं बभाषे—'भो भद्रेमां पुत्रीं नृपसुतानामपि दुर्लभां त्वं विडम्बयसि तत्किं कारणम् ?' । तदा मित्रानन्दः प्राह—'हे अक्क समये सर्वं भव्यं करिष्यामि । परंतु कथय, नृपवेश्मनि तव प्रवेशोऽस्ति न वा ?' । इत्युक्ते सा प्राह—'एषा मत्पुत्री राज्ञश्चामरधारिणी, तेन कारणेन दिवानिशं नृपमन्दिरेऽहमप्यनिवारितास्मि' । तथेति जल्पिते पुनरपि तेनोक्तम्—'हे अक्क तर्हि त्वं नृपसुतां रत्नमञ्जरीं जानासि ?' । तदा तया कथितम्—'सा मत्पुत्र्याः सखी' । इत्युक्ते मित्रानन्देन गदितम्—'हे अक्क तर्हि त्वया तस्या अग्र इत्थं वाच्यम्, यद्भद्रे यस्यामरदत्तस्य गुणोत्करं जनैः पठ्यमानं श्रुत्वा त्वयानुरागं दधानया लेखः प्रेषितोऽभूत्तस्य मित्रं समागतमस्ति" । इत्युक्ते साक्का तत्कार्यमङ्गीकृत्य यदा तस्या राजपुत्र्याः समीपे ययौ, तदा तया राजसुतया इति प्रोक्तम्—'हे अक्क समागम्यताम् । कापि वार्ता क्रियताम्' । इत्युक्ते सति तयाक्कया भणितम्—'हे राजपुत्रि अद्य त्वदीयवल्लभवृत्तान्तं तव कथयितुं समागतास्मि' । तदा सवि-

चिन्मोचे—'अस्य वयस्यः सुतरां प्रशस्यः। येन महोद्यमं विधाय स्वमित्रकृत ईदृशी मृगलोचना समानीता'। एका प्राह—'अयं श्रेष्ठी कथं न श्रेष्ठः ? येन भाग्यवताऽज्ञातकुलशीलोऽप्ययं पुत्रवत्प्रतिपालितः'। नारीणामेवं विधानालापाञ्छृण्वन् साऽमरदत्तो यदा राजमन्दिरद्वारे गतस्तदा हस्तिनः समुत्तीर्य नृपमण्डलसंसेवितः सन्नृपसभायां प्रवरासन उपविष्टः। रत्नमञ्जरी राज्ञी तथा मित्रानन्दनामा सुहृन्नृपसमीप उपविष्टः (ष्टौ)। अपरे जना यथास्थानमुपविष्टाः। तदनन्तरं मंत्रिसामन्ताद्यैस्तस्य पट्टाभिषेकं कृत्वा प्रणामश्चक्रे। तदनन्तरं तेन राज्ञा सा रत्नमञ्जरी पट्टराज्ञी कृता। मतिमान्मित्रानन्दः सर्वमुद्राव्यापारी विहितः। रत्नसारश्रेष्ठी पितृस्थाने संस्थापितः। एवं यथोचितं कृत्वा स कृतज्ञशिरोमणिस्तत्राखण्डितं राज्यं पालयामास ॥

इतश्च मित्रानन्दस्य राजकार्यव्यग्रस्यापि मरणसूचकं शवप्रोक्तं वचनं न विस्मृतम्। तेन कारणेन मानसी पीडा न याति। एकदा तेनामरदत्तनृपाग्रे निवेदितम्—'हे राजन् सा शवोक्ता मरणचिन्ता मम चित्ततो नो याति, यदर्थं देशान्तरं समाश्रितोऽस्मि'। इत्युक्ते भूभुजा भणितम्—'हे सखे त्वं खेदं मा कुर्याः। एतत्सर्वं व्यन्तरचेष्टितम्'। इत्युक्ते मित्रानन्दः प्राह—'आसन्नत्वेनात्र स्थितस्यापि मम मनो दूयते, तस्मान्मां क्वापि दूरे प्रेषय'। इति श्रुत्वा स्वचित्ते विचिन्त्य पुनरपि राज्ञा प्रोक्तम्—'हे मित्र यद्येवं तर्हि त्वं प्रतीतनरैः सह वसन्तपुरपत्तने गच्छ'। इत्युक्ते स वसन्तपुरं प्रति चलितः। इति शिक्षां दत्वा नृपेण स्वकीयाः पुरुषाः सार्थे प्रेषिताः—'अहो भवद्भिस्तत्रगतैर्भवतां मध्ये केनाप्यत्रागत्य मित्रानन्दस्य क्षेमवार्ता ममाग्रे कथनीया'। इत्युक्ते तथेति भणितम्। इतश्च स नृपो मित्रवियोगविह्वलोऽपि पुण्यप्राप्तां राज्यलक्ष्मीं तया राज्या सह बुभुजे। एतावता तेषां पुरुषाणां मध्ये बहुदिनैः कोऽपि न समागतः, तदा राज्ञा तस्य शुद्धिज्ञानकृतेऽपरे नराः पुनरपि प्रेषिताः। कियद्भिर्दिनैस्तेऽप्यागताः। तैर्नृपा-

त्तम्। स तत्रोपविश्यैवं प्राह—"भद्रे मया तव महान् मारीकलङ्कः प्रदत्तोऽस्ति। अद्य नृपस्त्वां मम दास्यति। यदि तव रोचते, तर्हि त्वां मदीयं स्थाने नयामि। चेत्तव न रोचते, तर्हि इयत्यपि कृते त्वां निष्कलङ्कां करोमि"। इत्युक्ते सा कन्या तद्गुणरञ्जि-ता दध्यौ—"अहो कोऽप्यसौ पुमान्मयि विषयेऽकृत्रिमप्रेमधारी वर्तते। तस्माद्दुःखमप्यङ्गीकृत्य मयासावाश्रयणीयः। राज्यस्थाः सु-लभाः, परं स्नेहवान् जनो दुर्लभः"। इति विचिन्त्य सावोचत्—'भोः सुभग मदीयाः प्राणा अपि त्वदायत्ताः सन्ति। अहं त्व-या सह समेष्यामि। त्वया किमिति न श्रुतम्—

'अंधो नरिंदचित्तं, वरसाणं पाणीयं च महिला य।
तत्तो गच्छंति फुडं, जत्तो धुत्तेहिं निज्जंति" ॥ १ ॥

इत्युक्ते मित्रानन्दः स्वमनोरथान् सिद्धाञ्ज्ञात्वा राजकन्यां बभाषे—'भद्रे यदाहं त्वन्मस्तके सर्षपान् क्षिपामि, तदा त्वया फेत्कारा मोच्याः'। इति निगदिते तया तथेति भणितम्। तदनन्तरं स नृपसमीपे समागत्येति प्रोचे—"राजन् सा मारी मम साध्यास्ति, परं त्वेकं शीघ्रवाहनं प्रेषय, यथेमां तस्मिन् वाहने चटाप्य निशायां तव देशान्तं नयामि। अन्तरा यदि सूर्योदयो भ-विष्यति, तर्हि तत्रैव सा मारी स्थास्यति"। इत्युक्ते भयभ्रान्तेन राज्ञा स्वकीया वायुवेगा मनोऽभीष्टा जात्यश्ववडवा तस्मै प्रदत्ता। त-तश्च संध्यासमये राजसुता केशेषु गृहीत्वा नृपादेशेन सेवकैस्तस्य मित्रानन्दस्य प्रदत्ता। तदा सर्षपैराच्छोट्य फेत्कारान्मुञ्चन्ती तेन

१ अन्धो नरेन्द्रचित्तं वर्षाणां पानीयं च महिला च। ततो गच्छन्ति स्फुटं यतो धूर्तैर्नीयन्ते ॥

याति दूरमसौ जीवोऽपायस्थानाद्भयद्रुतः । तत्रैवानीयते भूयोऽभिनवप्रौढकर्मणा ॥ ३ ॥

इति विमृशन्नारक्षकनरैरपराधं विनापि स तत्रैव वटे उद्बद्धः पञ्चत्वं प्राप्तः । अन्यदा रममाणानां गोपालानामण्डोलिकोत्प्लुत्य पूर्वकृतकर्मयोगात्तस्यापि मुखे पतिता " ॥

तदनन्तरममरदत्तनृपः श्रीगुरुमुखादेवंविधं मित्रसमाचारं श्रुत्वा तद्गुणान् स्मृत्वा स्मृत्वा वारंवारं गाढस्वरेण विललाप । तथा देवी रत्नमञ्जर्यपि तदीयगुणग्रामं संस्मरन्ती भृशं दुःखं व्यधात् । एतावता तौ द्वावपि विलपन्तौ दृष्ट्वा गुरुभिरेवं प्रोक्तम्—" दुःखं परित्यज्य भवस्वरूपं विज्ञाप्यताम् । अस्मिंश्चातुर्गतिकसंसारे प्राणिनां परमार्थतः सुखं नास्ति, दुःखं निरन्तरमेव वर्तते । संसारमध्ये स कोऽपि न विद्यते, यो मरणेन न पीडितः । चक्रवर्तिवासुदेवप्रमुखैर्महापुरुषैरपि मरणं प्राप्तमेव । तेन कारणेन शोकं त्यक्त्वा भो राजन् धर्मोद्यमं कुरु । यथेदृशी दुःखसन्ततिः पुनर्न जायते " । इत्युक्ते नृपः प्राह—' भगवन्नहं धर्मं करिष्यामि, परं मित्रानन्दजीवः कुत्र समुत्पन्नोऽस्ति ? निगद्यताम् ' । इति पृष्टे सूरिः प्रोवाच—" भो राजंस्त्वदीयास्तव देव्याः कुक्षौ स मित्रानन्दजीवः पुत्रत्वेन समागतोऽस्ति । यतस्तेन तदेयं भावना भाविता । तदनन्तरं परिपूर्णसमये स पुत्रो भावी । कमलगुप्तस्तस्याभिधानं भविष्यति । स कमलगुप्तः पूर्वं कुमारपदवीं प्राप्य क्रमेण राजा भविष्यति " । इति श्रुत्वा पुनरपि भूभुजा गुरुपार्श्वे पृष्टम्—" तस्य महात्मनो मित्रानन्दस्यापराधं विना चौरवन्मरणं कथं संजातम् ? । तया च देव्या रत्नमञ्जर्या मारीकलङ्कः कथं बभूव ? । मम बाल्यादपि बन्धुवियोगः कथं समुत्पन्नः ? । अस्माकं परस्परं स्नेहाधिक्यं, तत्कथं संजातम् ? " । इति नृपवाक्यं निशम्य स मुनिज्ञानं

ग्रे गदितम्—'राजंस्तत्र स मित्रानन्दोऽस्माभिर्न दृष्टः श्रुतोऽपि न'। तदनन्तरं संभ्रान्तचित्तेन राज्ञा देवीं प्रति बभाषे—'प्रिये किं करिष्यते ?। मित्रस्य वार्तापि न श्रूयते'। इति जल्पिते सा राज्ञी प्राह—'स्वामिन् यदि कोऽपि ज्ञान्यत्र समेति, तदा सन्देहोऽयं निवर्तते। अन्यथा कथं संशयो याति ?'। अत्रान्तरेऽकस्मादुद्यानपालकेन समेत्य नृपो विज्ञप्तः—"हे राजन् श्रीधर्मघोषसूरयश्चतुर्ज्ञानधरास्तव पुरेऽशोकतिलकोद्याने प्रासुकस्थण्डिले संस्थिता जनानां धर्मं समादिशन्तः सन्ति"। इत्युक्ते स नृपस्तस्य पञ्चांगप्रसादं कृत्वा तस्मिन् प्रस्तावे त्रिलोक्यमानभेन गुरोरागमनं श्रुत्वा भक्तितत्परः सन्महतीं सामग्रीं विधाय पट्टराज्ञीसहितस्तद्वन्दनार्थं ययौ। ततः खड्गछत्रादिराजचिह्नानि मुक्त्वा प्रदक्षिणात्रयं दत्वोत्तरासंगं विधाय विधिना गुरून् प्रणिपत्य सपरिकरोऽपि यथोचितस्थाने विनययुक्त्या निषण्णः। तदा गुरुभिरुक्तम्—'भो राजन् सर्वदुःखनिवारकः सकलसौख्यकारको धर्म एव विदुषां सेव्यः'। अत्रान्तरेऽशोकदत्तनामा वणिग्वर एवं गुरून् पप्रच्छ—"केन कर्मणा मम सुताऽशोकश्रीः सर्वाङ्गेषु गाढं वेदनाक्रान्ता बभूव ?। चिकित्साभिरपि तस्याः शरीरे रोगोपशान्तिर्न जाता"। इत्युक्ते सूरयः प्राहुः—"भो व्यवहारिन् पूर्वभवे इयं त्वत्पुत्री भूतशालनगरे भूतदेवश्रेष्ठिनः प्रिया कुसुमवती नामाभूत्। एकदा विडालिकया दुग्धे पीते सति तया कोपाद्देवमती नाम्नीं पुत्रवधूं प्रतीति बभाषे—'रे किं त्वं शाकिन्या गृहीताभूत् ? यत्त्वया दुग्धं न रक्षितम् ?'। इत्युक्तौ सा बालिका भयभ्रान्ता सती कंपयितुं लग्ना। तदनन्तरं तत्कालमेव कयाचिद्दुष्टप्रातव्यन्तर्या शाकिनीमंत्रयुक्तया छलं लब्ध्वा सा वधूश्छलिता। तदनन्तरं सातीव वेदनाक्रान्ता जाता। तदा बहुभिर्वैद्यैश्चिकित्सितापि दोषविवर्जिता न जज्ञे। एकदा तत्र कोऽपि योगी समागतः। तेन मंत्रवाद्बलेनाग्निना यंत्र तापिते सति सा मातङ्गी मुक्तकेशा वेदनार्दिता सती तत्र समेता। तदा योगिना पृष्टम्—'रे दुष्टे त्वयेयं वधूः कथं गृहीता ?'। इति निगदिते

समालम्ब्य तृतीये दिवसे रत्नद्वीपस्य तीरं प्राप्तौ । तदा तत्र द्वीपमध्ये तौ द्वौ नालिकेरीफलैः प्राणाधारं कृत्वा नालिकेरीतैलेन शरीरेऽभ्यङ्गं विधाय सज्जदेहौ जातौ तत्र स्थितौ स्तः । एकदा तत्र निष्ठुरा निर्दया पापा तीक्ष्णं खड्गं दधती एवंविधा रत्नद्वीपाधिष्ठात्री देवता समागत्य तयोरेवं बभाषे—"अहो युवां यदि मया सह विषयसेवां कुर्यातं, तर्हि युवयोः कुशलं भवेत् । अन्यथानेन खड्गेन नूनं शिरश्छेदं करिष्यामि" । इत्युक्ते तौ द्वावपि भयभ्रान्तौ जजल्पतुः—"हे देव्यावां भग्नप्रवहणौ तव शरणमाश्रितौ । यत्किञ्चित्त्वं कथयिष्यसि, तन्निश्चयेनावां करिष्यावः" । इत्युक्ते तया देव्या सुप्रसन्नया सत्या तौ स्वगृहे नीत्वा तदङ्गतः समस्तानप्यशुभपुद्गलानपहृत्य ताभ्यां समं स्वेच्छया विषयसुखं बुभुजे । तयोः प्रतिदिनममृतफलमाहारं सा देवी ददाति । तौ सुखेन तत्र कियन्ति दिनानि यावता स्थितौ, तावता तयैकदेति भणितम्—"भो लवणसागराधिष्ठायकेन सुस्थितनाम्ना देवेन ममेत्थं समादिष्टं विद्यते । 'यद्भद्रे एकविंशतिवारान् वार्धिं शोधय । तृणकाष्ठादिकं तथा किमप्यशुचिप्रायं यत् किमपि समुद्रमध्ये भवति, तत्सर्वं त्वया निष्कास्यैकान्ते परित्याज्यम् एवंविधो मदादेशः कर्तव्यः' । अतः कारणान्मया तत्र गन्तव्यम् । युवाभ्यां सुखेनेहैव स्थातव्यम् । एभिः सत्फलैः प्राणवृत्तिः कर्तव्या । कदाचिदत्र स्थितयोर्युवयोर्निर्जनत्वाद्यद्यरतिर्जायते, तर्हि क्रीडार्थं पूर्वदिग्वनखण्डे गन्तव्यम् । यत्र ग्रीष्मवर्षाऋतू सदावतीर्णौ वर्तेते । तत्र युवयोर्ऋतुद्वयविनोदो भविष्यति । अथवा यदि तत्रापि भवच्चित्तं सन्तोषं न प्राप्नोति, तदा ममाज्ञयोत्तरदिशि वनखण्डमस्ति, तत्र गन्तव्यम् । यत्र नित्यं शरद्धेमन्तनामकमृतुद्वयं स्थितमस्ति । यदि कदाचित्तत्रापि युवयोर्मनस्तुष्टिर्नोत्पद्यते, तर्हि पश्चिमायां दिशि वनखण्डमस्ति, तत्र गमनीयम् । यत्र शिशिरवसन्तावतारो नित्यं प्रवर्तते । तत्र विनोदार्थं यातव्यम् परन्तु दक्षिणस्यां दिशि वनखण्डमस्ति तत्र सर्वथा न गन्तव्यम् यतस्तत्र महाकायः कृष्णवर्णो दृष्टिविषनामा सर्पोऽस्ति

प्रयुज्य तत्स्वरूपं विज्ञाय प्रोक्तवान्—

" भो नराधिप शृणु—इतो भवात्तृतीयभवे त्वं क्षेमंकराभिधः कौटुम्बिक आसीः । तद्भार्या सत्यश्रीर्बभूव । तद्गृहे चण्डसेनाभिधानः कर्मकरोऽभवत् । स कर्मकरस्तयोर्दम्पत्योर्भक्तः स्नेहवान् विनीतश्च समभूत् । एकदा स कर्मकरस्तदीयक्षेत्रे कर्म कुर्वन् परक्षेत्रे कमपि पथिकं धान्यशम्बां गृह्णन्तं ददर्श । तदा तेन कर्मकृतेत्युक्तम्—' अहो अमुं चौरमस्मिन् वृक्षे उल्लंबय ' । क्षेत्रस्वामिना तस्य किमपि न प्रोक्तम् । तदा पथिकः स्वमनसीति कारणाद्दूनः, ' यत्क्षेत्रस्वामी किमपि न कथयन्नस्ति । असौ परक्षेत्रस्थः पापात्मा कीदृशं निष्ठुरं वदन्नस्ति ? ' स इति चिन्तयन् स्वस्थानं गतः । तदा कर्मकृता कोपसहितेन निष्ठुरवाक्येन निबिडं कर्म बद्धम् । तथैकदा भोजनं कुर्वन्त्या वध्वा गलके उत्सुकत्वेन कवलो विलग्नस्तदा कौटुम्बिकपत्न्या सत्यश्रियेत्युक्तम्—' हे निशाचरि त्वं लघुभिः कवलैः कथं न भक्षयसि ? यथा गले न विलगति ' । तथा कौटुम्बिकेनैकवारं कर्मकरस्येति जल्पितम्—' भो अद्य ग्रामे किमपि कार्यमस्ति, तत्र गच्छ ' । तदा तेनोक्तम्—' अद्याहं स्वजनमिलनाय समुत्कण्ठितोऽस्मि ' । तदेर्ष्यया कौटुम्बिकेनोक्तम्—' तव स्वजनाः कदापि मा मिलन्तु ' । तदा कर्मकरो मनसि दूनः, परंतु तत्रैव स्थितोऽस्ति । एतावता मुनिद्वन्द्वं तस्य गृहे समागतम् । तदा तेन कौटुम्बिकेन स्वप्रियाया इति भणितम्—' मुनिभ्यां दानं देहि ' । इत्युक्ते सापि प्रमुदिता सत्पात्रयोगोऽयमिति विचिन्त्य शुभभावनया प्रासुकैर्भक्तपानाद्यैस्तौ मुनी प्रतिलाभितौ । तदा समीपस्थः कर्मकरोऽप्येवं दध्यौ—' इमौ जायापती धन्यौ, याभ्यां स्वसदनमायातौ महामुनी भोजनसमये भक्त्या सत्कृतौ ' । अत्रान्तरे दैवयोगेन तेषां त्रयाणां पतिपत्नीकर्मकराणां शिरसि विद्युत्पतिता । तदनु ते त्रयोऽपि सममेव पञ्चत्वं प्राप्य सौधर्मकल्पे स्नेहनिर्भराः सन्तो देवत्वं प्राप्ताः । तदनन्तरं क्षेमं-

रतेर्दुःखं पूर्वभवे जीवैरनुभूतं गुरुणा कथ्यते । यथा शैलको यक्षः शूलास्थितनरेण तयोः श्रेष्ठिपुत्रयोस्तारको ज्ञापितस्तथा संयमो भवोत्तारणाय गुरुणोपदिश्यते । यादृशः समुद्रस्तादृशः संसारः । यथा तस्या रत्नद्वीपदेव्या वशीभूतो जिनरक्षितो विनष्टस्तथा जन्तुः संसारी अविरतिवशीभूतो विनश्यति । यथा देवतावाक्यनिरपेक्षो यथादेशतत्परः सन् जिनपालितः क्रमेण स्वपुरीं प्राप्तस्तथा यो जीवोऽविरतिं परित्यज्य पवित्रचारित्रे निश्चलात्मा भवति, स कर्मक्षयं विधाय स्वल्पकालेन निर्वाणसुखं प्राप्नोति । अतः कारणाद्भो राजर्षे चारित्रं प्रतिपद्य भोगेषु मनो न विधेयम्" । गुरुणेति समादिष्टे स राजर्षिरत्यादरेण निरतिचारतया संयमं पालयामास । तथा गुरुणा रत्नमञ्जरी साध्वी प्रवर्तिनीसमीपे मुक्ता । सा तत्रस्था निरन्तरं तपःसंयमादिकं प्रतिपालयति स्म । क्रमेण तौ द्वावपि निर्मलं तपः कृत्वा मनोरमं संयमं प्रतिपाल्य परमं पदं प्राप्तौ ॥

## ॥ इत्यमरदत्तमित्रानन्दकथानकम् ॥

इति स्वयंप्रभमुनिपार्श्वे श्रुत्वा स्तिमितसागरनामा नृपः प्रतिबुद्धः । तदनन्तरं तेन स्तिमितसागरनृपेणानन्तवीर्यं पुत्रं राज्ये संस्थाप्यापरं सुतमपराजितनामानं कुमारत्वे निवेश्य, तस्यैव मुनेः पार्श्वे दीक्षा गृहीता । तदनन्तरं तेन दीक्षा पालिता, परं प्रान्तसमये मनसा किंचित्संयमं विराध्य विपद्याधोलोके भुवनपतिमध्ये चमरेन्द्रनामा सुराधिपो बभूव ।

इतश्च तयोरपराजितानन्तवीर्ययो राज्यं कुर्वतोः केनापि विद्याधरेण सह मैत्री संजाता । ततस्तेन विद्याधरेण तयोर्नभोगामिनीप्रमुखा विद्याः प्रदत्ताः । समग्रोऽपि तत्साधनोपायः कथितः । इतश्च तद्गृहे बर्बरीचिलातीनाम्ना दासीद्वयमस्ति । परं ते द्वे अपि दास्यौ गीतनाट्यविषयेऽतीव विशारदे स्तः । एतावता तदीयगीतनाट्यकलया चमत्कृतौ तावपराजितानन्तवीर्यनृपौ निरन्तरमेव

प्रयुज्य तत्स्वरूपं विज्ञाय प्रोक्तवान्—

"भो नराधिप शृणु—इतो भवात्तृतीयभवे त्वं क्षेमंकराभिधः कौटुम्बिक आसीः। तद्भार्या सत्यश्रीर्बभूव। तद्गृहे चण्डसेनाभिधानः कर्मकरोऽभवत्। स कर्मकरस्तयोर्दम्पत्योर्भक्तः स्नेहवान् विनीतश्च समभूत्। एकदा स कर्मकरस्तदीयक्षेत्रे कर्म कुर्वन् परक्षेत्रे कमपि पथिकं धान्यशम्बां गृह्णन्तं ददर्श। तदा तेन कर्मकृतेत्युक्तम्—'अहो अमुं चौरमस्मिन् वृक्षे उल्लंबय'। क्षेत्रस्वामिना तस्य किमपि न प्रोक्तम्। तदा पथिकः स्वमनसीति कारणाद्दूनः, 'यत्क्षेत्रस्वामी किमपि न कथयन्नस्ति। असौ परक्षेत्रस्थः पापात्मा कीदृशं निष्ठुरं वदन्नस्ति?' स इति चिन्तयन् स्वस्थानं गतः। तदा कर्मकृता कोपसहितेन निष्ठुरवाक्येन निविडं कर्म बद्धम्। तथैकदा भोजनं कुर्वन्त्या वध्वा गलके उत्सुकत्वेन कवलो विलग्नस्तदा कौटुम्बिकपत्न्या सत्यश्रियेत्युक्तम्—'हे निशाचरि त्वं लघुभिः कवलैः कथं न भक्षयसि? यथा गले न विलगति'। तथा कौटुम्बिकेनैकवारं कर्मकरस्येति जल्पितम्—'भो अद्य ग्रामे किमपि कार्यमस्ति, तत्र गच्छ'। तदा तेनोक्तम्—'अद्याहं स्वजनमिलनाय समुत्कण्ठितोऽस्मि'। तदेर्ष्यया कौटुम्बिकेनोक्तम्—'तव स्वजनाः कदापि मा मिलन्तु'। तदा कर्मकरो मनसि दूनः, परंतु तत्रैव स्थितोऽस्ति। एतावता मुनिद्वन्द्वं तस्य गृहे समागतम्। तदा तेन कौटुम्बिकेन स्वप्रियाया इति भणितम्—'मुनिभ्यां दानं देहि'। इत्युक्ते सापि प्रमुदिता सत्पात्रयोगोऽयमिति विचिन्त्य शुभभावनया प्रासुकैर्भक्तपानाद्यैस्तौ मुनी प्रतिलाभितौ। तदा समीपस्थः कर्मकरोऽप्येवं दध्यौ—'इमौ जायापती धन्यौ, याभ्यां स्वसदनमायातौ महामुनी भोजनसमये भक्त्या सत्कृतौ'। अत्रान्तरे दैवयोगेन तेषां त्रयाणां पतिपत्नीकर्मकराणां शिरसि विद्युत्पतिता। तदनु ते त्रयोऽपि सममेव पञ्चत्वं प्राप्य सौधर्मकल्पे स्नेहनिर्जराः सन्तो देवत्वं प्राप्ताः। तदनन्तरं क्षेमं-

रतेर्दुःखं पूर्वभवे जीवैरनुभूतं गुरुणा कथ्यते । यथा शैलको यक्षः शूलास्थितनरेण तयोः श्रेष्ठिपुत्रयोस्तारको ज्ञापितस्तथा संयमो भवोत्तारणाय गुरुणोपदिश्यते । यादृशः समुद्रस्तादृशः संसारः । यथा तस्या रत्नद्वीपदेव्या वशीभूतो जिनरक्षितो विनष्टस्तथा जन्तुः संसारी अविरतिवशीभूतो विनश्यति । यथा देवतावाक्यनिरपेक्षो यथादेशतत्परः सन् जिनपालितः क्रमेण स्वपुरीं प्राप्तस्तथा यो जीवोऽविरतिं परित्यज्य पवित्रचारित्रे निश्चलात्मा भवति, स कर्मक्षयं विधाय स्वल्पकालेन निर्वाणसुखं प्राप्नोति । अतः कारणाद्धो राजर्षे चारित्रं प्रतिपद्य भोगेषु मनो न विधेयम्" । गुरुणेति समादिष्टे स राजर्षिरत्यादरेण निरतिचारतया संयमं पालयामास । तथा गुरुणा रत्नमञ्जरी साध्वी प्रवर्तिनीसमीपे मुक्ता । सा तत्रस्था निरन्तरं तपःसंयमादिकं प्रतिपालयति स्म । क्रमेण तौ द्वावपि निर्मलं तपः कृत्वा मनोरमं संयमं प्रतिपाल्य परमं पदं प्राप्तौ ॥

॥ इत्यमरदत्तमित्रानन्दकथानकम् ॥

इति स्वयंप्रभमुनिपार्श्वे श्रुत्वा स्तिमितसागरनामा नृपः प्रतिबुद्धः । तदनन्तरं तेन स्तिमितसागरनृपेणानन्तवीर्यं पुत्रं राज्ये संस्थाप्यापरं सुतमपराजितनामानं कुमारत्वे निवेश्य, तस्यैव मुनेः पार्श्वे दीक्षा गृहीता । तदनन्तरं तेन दीक्षा पालिता, परं प्रान्तसमये मनसा किंचित्संयमं विराध्य विपधाधोलोके भुवनपतिमध्ये चमरेन्द्रनामा सुराधिपो बभूव ।

इतश्च तयोरपराजितानन्तवीर्ययो राज्यं कुर्वतोः केनापि विद्याधरेण सह मैत्री संजाता । ततस्तेन विद्याधरेण तयोर्नभोगामिनीप्रमुखा विद्याः प्रदत्ताः । समग्रोऽपि तत्साधनोपायः कथितः । इतश्च तद्गृहे बर्बरीचिलातीनाम्ना दासीद्वयमस्ति । परं ते द्वे अपि दास्यौ गीतनाट्यविषयेऽतीव विशारदे स्तः । एतावता तदीयगीतनाट्यकलया चमत्कृतौ तावपराजितानन्तवीर्यनृपौ निरन्तरमेव

एवं कथयित्वा सा देवता ययौ। तदनन्तरं तौ श्रेष्ठीपुत्रौ पूर्वकथिते वनत्रये स्वेच्छया गतौ। तदनन्तरं ताभ्यां चिन्तितम्—'दक्षिणदिग्वने गच्छन्तौ तयावां पुनः पुनः कथं वारितौ ?'। इति विचिन्त्य यावत्तौ सशंकं तत्र गन्तुं प्रवृत्तौ, तावत्तयोर्नासिकायां कदर्यः परिमलः समागतः। तदनन्तरं तौ नासिकाविवरमुत्तरीयवस्त्रेण स्थगयित्वा यावदग्रतो गतौ, तावत्तत्र नरकरंकानां समूहं ददृशतुः। तदा भयभ्रान्तसदृशौ जातौ। ततश्च यावदग्रतः समागत्य तद्वनं पश्यतस्तावता शूलिकास्थितं पुरुषमेकं जीवन्तं विलापं कुर्वन्तं दृष्ट्वा तत्समीपे ताभ्यां पृष्टम्—'भो भद्र त्वं कः ? तवेदृशी व्यवस्था कथं जाता ? सर्वतोऽप्यमी शवा दृश्यन्ते तत्किम् ?'। इति प्रश्ने कृते स शूलिकास्थितः पुमान् प्राह—"भो अहं काकन्दीपुरीवास्तव्यो जात्या वणिक्। मम प्रवहणमारुह्य वाणिज्यार्थं गच्छतः सतस्तोयनिधौ प्रवहणं भग्नम्। तदनन्तरं फलकं प्राप्य दैवयोगाद्रत्नद्वीपे समागतः। ततो विषयलुब्धया रत्नद्वीपदेव्या विषयसेवार्थमहं रक्षितः। इतोऽनया कियद्भिर्दिनैः स्वल्पेऽप्यपराधे शूलिकायां निहितोऽस्मि। तथैते सर्वेऽपि शवास्तया दुष्टदेवतयैतेनैव विधिना कृताः। पुनर्युवां कुत आगत्यैतस्या दुष्टदेवतायाः संकटे पतितौ"। तदनन्तरं ताभ्यां निजवृत्तान्तं तस्याग्रे निवेद्य पुनस्तत्पार्श्वे इति पृष्टम्—'आवयोः कोऽपि जीवनोपायः प्रवर्तते ?'। इत्युक्ते तेन निगदितम्—"भोः श्रूयताम्। इतः पूर्वस्यां दिशि वनखण्डं विद्यते। तत्र शैलको नामा यक्षोऽस्ति। स पर्वदिवसेष्वश्वरूपं कृत्वैवं प्रजल्पति—'कं नरं रक्षामि ? कं विपदस्तारयामि ?'। भोस्तं शैलकाभिधं यक्षं युवां भक्त्याराधयतम्। यदा स एवं प्रजल्पति 'कं रक्षामि' तदा भवद्भ्यां निगद्यं 'भो यक्षराजावां रक्ष"। स शूलप्रोतनरस्तयोरीदृशीं शिक्षां दत्वा विपन्नः। तदनन्तरं तौ तत्र वने गत्वा भव्यकुसुमैस्तं यक्षराजं पूजयित्वा सेवां कर्तुं लग्नौ। एतावता यदा पर्वसमये स यक्ष इति जजल्प—'कं रक्षामि ? कं विपदस्तारयामि ?' तदा तत्क्षणमेव ताभ्यां प्रोक्तम्—'आवां

पो विमानं स्थापयित्वा तत्सैन्यं विलोकयितुं लग्नः । तदा कल्पान्तकालसमुद्र इव गजाश्वपत्तिप्रबलारावसंकुलः सैन्यसमुच्चयो दृष्टः ।
यावता तं सैन्यसमूहं विलोक्य केशवो युद्धसज्जतां कर्तुं लग्नः, तावता सैन्यसागरे दृष्टे कनकश्रीकन्यकां भयसमाकुलां वीक्ष्य तां स-
माश्वास्य स्वकीयं बलं संमिल्यैकत्र विहितवान् । तदनन्तरं तयोर्दमितार्यनन्तवीर्ययोः सैन्यसुभटाः परस्परं युद्धतत्परा बभूवुः । ततस्तु-
मुले संग्रामे संजायमाने स्वसैन्यं प्रत्यनीकभटैर्भग्नं वीक्ष्यानन्तवीर्यनृपः किञ्चिच्चिन्तामपन्नो जातस्तदा भाग्यवशेन तत्कालमेव देवता-
धिष्ठितानीमानि रत्नानि तस्य संजातानि—एकं रत्नं वनमाला, द्वितीयं गदा, तृतीयं कृपाणः, चतुर्थं मणिः कौस्तुभाख्यः, पञ्च-
मं शंखः पाञ्चजन्यनामा, षष्ठं धनुः शार्ङ्गाख्यं, सप्तमं चक्रं प्रतिवासुदेवस्य समेष्यति । एवं रत्नषट्के समागते सति सोऽनन्तवीर्यनृपः
सोत्साहो भूत्वा पाञ्चजन्यशंखं करे कृत्वा मुखे दत्वा महाबलेन यावता तं पूरयामास, तावता तस्य प्रबलध्वनिना समग्रमपि शत्रुसैन्यं
मुमूर्छे, अनन्तवीर्यस्याखिलमपि बलं सबलं जातम् । ततो दमितारिः स्वयं योद्धुं ढुढौके । तदनन्तरं केशवोऽप्यपराजितभ्रातृसहितः सं-
नह्य रथमारुह्य बहूनि शस्त्राणि गृहीत्वा युद्धाय समुत्थितः । तदा तयोरन्योऽन्यं तुमुलः संग्रामः प्रवृत्तः । अनेकशः सुभटाः पतिताः ।
गजाश्वसंख्यापि न लभ्यते । नवीना रक्तनद्यः प्रकटीबभूवुः । दमितारिप्रयुक्तानि सर्वाण्यपि शस्त्राणि हरिर्जहार । तदनन्तरं प्रति-
विष्णुना देदीप्यमानं महातीक्ष्णं चक्रमनन्तवीर्यं प्रति मुक्तम् । तदा तेन चक्रेण तुम्बप्रहारेण किंचित्तं केशवं हृदये निहत्य तस्यैव
हरेः करे यदा संतस्थौ, तदा विष्णुना चक्रं पाणौ समादाय प्रतिविष्णुं प्रति भणितम्—" भो दमितारिनृप त्वं युद्धं त्यक्त्वा सेवक-
त्वं प्रतिपद्य सुखेन राज्यं भुंक्ष्व । वृथा मा म्रियस्व । त्वं कनकश्रीपितेति कारणान्मयामुक्तोऽसि " । इत्युक्ते तेनोदितम्—" त्व-
मपि चक्रं मम सन्मुखं मुञ्च । अन्यथानेन तीक्ष्णखड्गेन चक्रं तथा त्वामपि खण्डयिष्यामि " । इति निगद्य सद्यसैवाकाशस्थं ख-

गीतनाट्यरसतत्परौ बभूवतुः । अन्यदा तयोर्गीतनाट्यरसव्यग्रत्वे सत्यकस्मात्तत्र स्वेच्छाचारी नारदर्षिः समाययौ । तदा ताभ्यां गीतनाट्यविनोदतत्पराभ्यां तस्य नारदमुनेरभ्युत्थानादिक्रिया न विदधे । तदनन्तरं स नारदर्षिः सकोपः सन्नेवं चिन्तयामास—" अहो चेटीनाट्यविमोहिताभ्यामेताभ्यामहमपि समागतो न ज्ञातः । तर्हि केनापि सबलनृपेणेमे कलापात्रे द्वे अपि चेटिके अपहारयिष्यामि " । इति विचिन्त्य स त्रैलोक्यचारी कलिप्रियो नारदो विद्याधराधिपराजस्य त्रिखण्डाधिपतेः प्रतिवासुदेवस्य दमितारिनृपस्य समीपे गतः । तदा तेन तं मुनिं दृष्ट्वा तत्क्षणमेव सन्मुखमभ्युत्थानं कृत्वासनादिप्रतिपत्तिं विधायेति पृष्टम्—' भो मुने पृथिव्यां किञ्चिदाश्चर्यं दृष्टम् ? ' । तदा स नारदः प्राह—" भो राजेन्द्र शृणु । अहं शुभगायां पुरि अनन्तवीर्यनृपस्य समीपे गतोऽभूवम् । तत्र मया बर्बरीचिलातीनाम्न्योश्चेट्योर्नाट्यं विलोकितम् । तदा महान् विस्मयो जातः । भो राजंस्तव सदने तादृशानि गीतनाट्यक्रियाकुशलानि पात्राणि यदि न सन्ति, तर्हि तव विद्याबलेन किम् ? राज्यस्फीत्या च किम् ? सर्वमपि त्वदीयं प्रौढत्वं वृथा " । इति निगद्य स मुनिरन्यत्र ययौ । अथ तेन प्रतिविष्णुराज्ञाभिमानपूरितेन तत्क्षणमेवानन्तवीर्यनृपराजधान्यां दूतं प्रेष्येति कथापितम्—" अहो सर्वाण्यपि रत्नानि निश्चयेन राजाधिराजगृहं समाश्रयन्ति । अतः कारणान्नाट्यकलानिपुणे द्वे अपि चेट्यौ शीघ्रमेव मम समर्पय । विलम्बो न विधेयः " । इत्युक्ते ताभ्यामपराजितानन्तवीर्यनृपाभ्यामुक्तम्—" भो दूत त्वं युक्तं जल्पसि, परं विमृश्य सज्जतां कृत्वा दासीप्रेषणादिकार्यं करिष्यावः । त्वया स्वामिपार्श्वे गम्यताम् " । इति निगद्य दूतो विसृष्टः । तदनन्तरं ताभ्यां परस्परमिति विमृष्टम्—" यावता विद्याबलेनासावावयोः कञ्चित्पराभवं करिष्यति, तावतावामपि विद्यासाधनं विधायास्य दर्पं ( कदर्थनां करिष्यावः इति वा पाठः ) हरिष्यावः । इति चिन्तयतोस्तयोर्द्वयोर्भ्रात्रोः पूर्वभवसाधिताः सर्वा अपि ता विद्याः स्वयमेवोपस्थिताः । ता-

पुरे समागत्योपद्रवं कर्तुं प्रवृत्तः । परं स कीदृशोऽस्ति ? मदोन्मत्तः शंखवच्छ्वेतवर्णः पर्वतप्रायो महाकायः कृतान्तवज्जनोपद्रवकारी । एवंविधं करिणं दृष्ट्वा भयभ्रान्तैर्जनैर्नृपाग्रे निवेदितम् । तदा पुरस्वामिना तन्निवारणाय स्वकीयं सैन्यं प्रेषितम् । परं सबलसैन्येनापि स वनगजो निवारयितुं न शक्यते । तदनन्तरं सज्जतां कृत्वा सुभटश्रेणिसमन्वितः स्वयमेव भूपतिर्यावता तं गजं प्रति चचाल, तावता नरसिंहकुमारः क्ष्मापतिं विनिवार्य कुञ्जरमर्दनार्थं सैन्येन सह प्रचलितः । तदानीं तेन कुमारेण नवहस्तप्रलम्बः सप्तहस्तोच्चः करत्रयविस्तीर्णोऽतिप्रलम्बदन्तकरस्तुच्छपुच्छो मधुपिंगललोचनश्चत्वारिंशत्समधिकशतचतुष्टयलक्षणसमलंकृतशरीर एवंविधः करी दृष्टः । तदा गजशिक्षानिपुणेन तेन कुमारेणाभियानापसरणप्रपातोत्पतनादिभिरनेकप्रकारैस्तं गजं खेदयित्वा वशं समानिन्ये । तदनन्तरं स नरसिंह-कुमारस्तस्मिन्नैरावणसमाने गजे समारूढः पुरन्दरतुलनां दधत्तं गजेन्द्रं समानीयालानस्तंभे बबन्ध । ततः स्वयमुत्तीर्य तस्य गजराज-स्यारात्रिकविधिं विदधे । तदनन्तरं विनयान्वितः सन् स्वपितुः समीपे गतः । तदा हर्षेण पित्रा तस्य पुत्रस्य परिरंभादिगौरवं कृत्वा स्वचित्त इति विचिन्तितम्—" अयं मत्सुतो राज्यभारक्षमो जातः । तेन कारणेनामुं पुत्रं राज्यभारधौरेयं कृत्वा मया संयमराज्यं स्वीक्रियते " । इति ध्यात्वा स नृपो मंत्रिसामन्तपौरजनसमक्षं शुभवेलायां तं नृसिंहकुमारं स्वपदे संस्थाप्य जयन्धरगुरोः पार्श्वे दीक्षां जग्राह ॥

इतश्च नृसिंहकुमारो राज्यं प्राप्य न्यायमार्गेण पृथिवीं पालयामास । अन्यदा प्रचण्डेन मायाविनाऽग्रालेणालक्षितेन केनापि चौरेण सा पुर्यत्यन्तं मुषिता । तदा पुरीवास्तव्यमहाजनलोकेन स राजा विज्ञप्तः । ततो राज्ञा चौरनिग्रहायारक्षकः समादिष्टः । परंतु स चौर आरक्षग्रहे न समायाति । विशेषतः पौराणां सन्तापं कर्तुं लग्नः । तदा पुनरपि महाजनैर्नृपाग्रे विज्ञप्तम्—' भो देव

स दमितारिश्चक्रेण निधनं प्रापितः । त-

द्गं प्रकटीकृत्य तं हन्तुं यावद्धावितस्तावता खड्गखेटकधारिणाऽनन्तवीर्येण स्वसंमुखमागच्छन् स दमितारिश्चक्रेण निधनं प्रापितः । त-

त्र व्यन्तरदेवैस्तस्योपरि पुष्पवृष्टिः कृता । तथा गाढस्वरेण सर्वजनसमक्षमिति जल्पितम्—" अयं विजयार्धस्वामी वासुदेवो जातः,

द्वितीयो भ्राता बलदेवश्च बभूव । अत एतौ द्वावपि चिरं जयताम् " । ततोऽनन्तरं सर्वेऽपि विद्याधरजनाः प्रणामं कृत्वा तं वासुदेवं

प्रति समाश्रिताः । ततश्च विष्णुनापि विशेषतस्ते सत्कृताः । ततः परमपराजितानन्तवीर्यनृपौ विद्याधरान्वितौ निरुपमानं विमानं समा-

रुह्य स्वपुरीं प्रति चलितौ । तदा मार्गे गच्छन्तौ कनकाचलसमीपे समागतौ, तदा विद्याधरैरित्युक्तम्—" भोः स्वामिनावत्र महागिरौ

जिनचैत्यानि सन्ति । तानि नमस्कृत्याग्रतो गम्यते । तीर्थोल्लंघना न विधीयते " । इत्याख्याते तत्क्षणमेवापराजितानन्तवीर्यौ विमाना-

त्समुत्तीर्य हर्षोत्कर्षेण भक्त्या तानि तीर्थानि वन्दित्वा यावत्ततस्ततो विलोकयितुं लग्नौ, तावत्तैकस्तत्र चैत्यमध्ये कीर्तिधराभिधो महामु-

निर्दृष्टः । तदानीं विद्याधरैर्भणितम्—" सोऽयं महामुनिर्वर्तते । येन वर्षोपवासतपसा कर्माणि निर्जित्य केवलज्ञानं संप्राप्तम् । तस्य म-

हर्षेश्चरणयात्रा क्रियताम्" । इति ज्ञापिते तौ सपरिकरौ परमानन्देन तं मुनिं वन्दित्वा तदग्रे विशुद्धे धरापीठे समुपविश्य तदीयां म-

नोहारिणीं वाणीं श्रोतुं लग्नौ । तद्यथा—

**मिथ्यात्वमविरतिश्च कषाया दुःखदायिनः । प्रमादा दुष्टयोगाश्च पञ्चैते बन्धकारणम् ॥ १ ॥**

भो भव्या एतानि पञ्च प्रकाराणि संसारिणां जीवानां बन्धकारणानि वर्तन्ते । तानि कानि ? । प्रथमं बन्धनं मि-

थ्यात्वं ज्ञेयम् यत्सत्यार्थदेवगुरुधर्मेषु न भावः । तथा पापकर्मसु स्तोकमपि न वर्जनम् साऽविरतिर्द्वितीयं बन्धकारणं स्यात् । क-

स्वयं दीपच्छायायां तस्थौ, तावता सा यंत्रमयी शय्या दवरकसञ्चारणयोगेन तत्क्षणमेव भग्ना । उच्छीर्षके शय्याया अधोऽन्धकूपोऽस्ति, तत्र पतितम् । तदा राज्ञा समग्रापि कूटरचना ज्ञाता । चौरभगिन्योच्छीर्षसञ्चारो यदा श्रुतस्तदेति ज्ञातम्—'स एव पुमान् यंत्रशय्यायामुपविष्टः कूपमध्ये पतितः' । इति विचिन्त्य सा हास्यं कुर्वन्ती हस्ततालं दत्वैवं यावता कथयामास—'भव्यं जातं, मम भ्रातृवधको मया निपातितः' । तावद्भूपेन तद्वाक्यं श्रुत्वा, तां तस्करभगिनीं केशेषु धृत्वेति प्रोचे—"रे रण्डे त्वमप्येवं कुर्वन्ती भ्रातृमार्गमनुगमिष्यसि' । इत्युक्ते सा दीनवाक्यानि जल्पन्ती अबला राज्ञा मुक्ता । तदनन्तरं पातालगृहद्वारमुद्घाट्य नृपतिः शीघ्रमेव स्वसदनं समाययौ ततश्च स राजा प्रातःसमये समग्रमपि पुरीलोकं मेलयित्वा, तत्र गत्वा, यद्वस्तु यस्य बभूव, तत्तस्य दत्वा, तत्पातालगृहं चौरस्थानं बभञ्ज । तथा तेन चौरेण याः स्त्रियोऽपहृता बभूवुस्ता नृपादेशेन जनैः स्वस्वगृहेषु समानीताः । परं ताः स्त्रियश्चौरकृतकार्मणयोगात्स्वसदने रतिं न प्राप्नुवन्ति । चंचलत्वेन पुनः पुनश्चौरस्थान एव गच्छन्ति । तदा जनैस्तत्स्वरूपं पार्थिवाय निवेदितम् । ततस्तेन पार्थिवेन कार्मणोपचारज्ञः कोऽपि वैद्यः पृष्टः । तदानीं तेन नृपं प्रति निगदितम्—" राजंस्तेन चौरेणैतासां किमपि चूर्णं प्रदत्तमस्ति । तत्प्रभावेणेमाः परवशत्वं प्राप्ताः सन्ति । परं यदि भवन्तः कथयेयुः, तर्हि स्वचूर्णप्रदानेनाहमिमा नारीः स्वभावस्थाः करोमि । तदनन्तरं तेन वैद्येन नृपादेशं प्राप्य स्वचूर्णप्रभावेण ता गतकार्मणाः कृताः । परमेका नारी तादृश्येव स्थिता । तदा राज्ञा पुनरपि वैद्यं समाकार्य पृष्टम् । तदा तेन भिषग्वरेण प्रोक्तम्—"भो राजन् योगिनश्चूर्णेन कासांचिन्नारीणां त्वचैव वासिताऽभूत् । कासांचिन्मांसरुधिरे वासिते बभूवतुः । ताः सर्वा अपि मया प्रतिचूर्णेन स्वभावस्थाः कृताः । परमस्या नायिकाया योगिनश्चूर्णेनास्थिमज्जा वासिताः । अतः कारणादस्याः प्रतिचूर्णं न प्रभवति" । इत्युक्ते नृपेण पृष्टम्—"तर्ह्यपरः कोऽप्युपायोऽस्ति?"।

दुष्टचौरेण तव पुरी समग्रापि पराभूतास्ति । सरूपाः सयौवना नार्योऽपि बलात्कारेण चौरेण रात्रौ गृह्यन्ते । ततः कारणादस्माकमन्यत कुत्रापि वासस्थानं समर्पय, यत्र निरुपद्रवत्वेन वयं वसामः "। इत्युक्ते राज्ञा क्रोधधुर्धरेण तलारक्षकमाकार्येत्युक्तम्—'रे दुष्ट त्वं मनोवाञ्छितं ग्रासं गृह्णासि, परं पुरीरक्षां न करोषि, तत्किम् ?'। तदा महाजनेन प्रोक्तम्—'हे नाथास्य किं दूषणम् ? स चौरः सबलेनापि धर्तुं न शक्यते'। इति श्रुत्वा नरेन्द्रेण महाजनं प्रति गदितम्—'अहं तथा करिष्यामि यथा भव्यं भविष्यति'। इति कथयित्वा राज्ञा महाजनो विसृष्टः । तदनन्तरं राजा सचिन्तः सन् रात्रौ वंठवेषं विधाय स्वमन्दिरान्निःसृत्य चौरं विलोकयन् शंकास्थानेषु गुप्तस्थानेषु बभ्राम । सकलां रात्रिं पुरीमध्ये भ्रान्तः । दिवा पुरीबहिर्भ्रान्तः । परं तेन राज्ञा स चौरः क्वापि न दृष्टः । तदनन्तरं द्वितीयवासरे सन्ध्यासमये राजा बाह्यप्रदेशे एकतरुतले निविष्टोऽस्ति । एतावता कषायवस्त्रधारिणं मार्गरजःसंकीर्णं समागच्छन्तमेकं त्रिदण्डिकं ददर्श । यदा स समीपं समागतस्तदा नृपेण प्रणतः । तदा तेन त्रिदण्डिकेन नृपं प्रतीति भणितम्—'भोस्त्वं कुतः समागतः ? क्व यास्यसि ? तव कोऽर्थोऽस्ति ?'। इत्युक्ते वंठवेषधारिणा नृपेणोक्तम्—"भो भगवन्नहं द्रव्यार्थी सन् बहुदेशेषु भ्रान्तः, पुनर्मया क्वापि वित्तं न प्राप्तम् । तेन चिन्तां प्रपन्नोऽस्मि "। इत्यादिष्टे त्रिदण्डी प्राह—'भोः पथिक त्वया धनार्थिना के के देशा विलोकिताः ? तान्ममाग्रे निवेदय'। तेन यदेत्युक्तं तदा नृपेणोक्तम्—'अनेके देशा विलोकिताः सन्ति, परं कियतां नामानि शृणु—भोस्त्रिदण्डिन् मया लाटदेशो दृष्टः, यत्र नार्य एकवस्त्रान्विता एव भवन्ति । प्रायेण लोकः प्रियंवदो दृश्यते । केशस्य बाल इत्यभिधीयते । तथा स सौराष्ट्रनामा देशो दृष्टोऽस्ति, यत्र दीर्घचिकुरा मधुरस्वराः कंबलपरिधाना आभीरस्त्रियो दृश्यन्ते । ततः परं मया कुंकणाख्यो देशो दृष्टोऽस्ति । यत्र शालयो भुज्यन्ते । नागवल्लीदलानि कदलीफलानि बहूनि भवन्ति । एवं

पिशाचरूपः कथितः । तस्मादत्नीष्टवियोगाख्यमहारोगपीडितैः प्राणिभिः सुश्रुतोक्तं श्रेष्ठं धर्मौषधं विधेयम् "। एवंविधां गणभृद्देशनां श्रुत्वा स नृपः शोकं परित्यज्य तं गणनायकं वन्दित्वा गृहमागत्य स्वपुत्रं राज्ये संस्थाप्य नृपश्रेणिसमन्वितस्तस्यैव गणभृतः समीपे दीक्षां समाददे । तदनन्तरं बहुकालं तीव्रं तपस्तप्त्वा प्रान्तेऽनशनं कृत्वा शुभध्यानेन विपद्याच्युतकल्पे त्रिदशनायकः संजज्ञे ॥

इतश्चेहैव जंबूद्वीपे भरतक्षेत्रे वैताढ्यदक्षिणश्रेण्यां गगनवल्लभं नाम पुरं विद्यते । तत्र मेघवाहननामा विद्याधरनृपो बभूव । तद्भार्या रूपलावण्यशालिनी मेघमालिनी नाम संजज्ञे । एतावताऽनन्तवीर्यजीवो नरकादुद्धृत्य तत्कुक्षौ मेघनादाभिधः पुत्रोऽभूत् । क्रमेण यौवनं प्राप । तदा पित्रा मेघवाहनेन बह्वीः कन्या विवाह्य तं स्वराज्ये निवेश्य स्वयं व्रतं जगृहे । अथ मेघनादनृपतिः श्रेणिद्वयस्वाम्यजनिष्ट । दशोत्तरं शतं देशान् स्वसुतेभ्यः प्रददौ । एकदा स मेघनादनामा नृपः श्रेणिद्वयस्वामी सुराद्रौ गत्वा शाश्वतजिनप्रतिमास्तथा प्रज्ञप्तिं विद्यां भक्तिपूर्वकं पूजयामास । तदानीं तत्र सर्वेऽपि स्वर्गवासिनो देवाः समाजग्मुः । तन्मध्येऽपराजितजीवो योऽच्युतेन्द्रः सोऽपि समेतोऽस्ति । तेन मेघनादनामा विद्याभृद्दक्षो संभाषितश्च । ततः पूर्वभवस्वरूपं तस्याग्रे समाख्याय धर्मं कथयित्वा सोऽच्युतेन्द्रः स्वस्थानं गतः । ततः परं मेघनादनामा खेचरेन्द्रस्तत्प्रतिबोधेन संजातवैराग्यः स्वयम्प्रभसूरिगुरुपार्श्वे संयमं प्रतिपद्य नन्दनपर्वते गत्वा दुस्तपं तपस्तेपे । एतावताश्वग्रीवसुतजीवेनासुरकुमारमध्यवर्तिना पूर्वभववैरं स्मरतैकरात्रिकीप्रतिमास्थितस्य तस्य मुनेर्महोपसर्गाः कृताः । तथापि स ध्यानान्न चलितः । तदनन्तरं प्रातःसमये तां प्रतिमां पारयित्वा जगतीतले विहृत्यान्ते समाधिना मृत्वा सोऽप्यच्युतकल्पे सुरः संजातः ॥

॥ इत्याचार्यश्रीअजितप्रभसूरिविरचिते श्रीशान्तिनाथचरिते गद्यबन्धे षष्ठसप्तमभववर्णनो नाम तृतीयः प्रस्तावः ॥

तदा वैद्यः प्राह—" यदि तस्य चौरस्यास्थीनि घर्षयित्वैतस्याः प्रमदायाः पाय्यन्ते, तर्हीयं स्वस्थावस्था जायेत, अन्यथा न"। इत्युक्ते राज्ञा तथा कारितम्। ततः सापि योषा निर्दोषा जाता ततः परं सर्वोऽपि पौरजनः सुखी जातः। राजा नरसिंहः सुखेन राज्यं कुर्वन्नस्ति। एतावता कियता कालेन स एव श्रीजयन्धराचार्यस्तत्र समागतः। यत्पार्श्वे पुरापि नृपजनकेन जितशत्रुनाम्ना दीक्षा गृहीता। इतश्च नरसिंहनृपोऽपि तदीयवन्दनार्थं गतः। धर्मं श्रुत्वा प्रतिबोधं प्राप्य गुणसागरसुतं राज्ये संस्थाप्य परमवैराग्येण संयमं समादाय, दुष्करं तपः कृत्वा, कर्मक्षयं विधाय राजर्षिः शिवसंपदं प्राप्तः " ॥

## ॥ इति नृसिंहराजर्षिकथानकम् ॥

इति दृष्टान्तं निगद्य सुव्रतसाधुः श्रीदत्तां प्रति बभाषे—" हे भद्रे यथा तस्य योगिनश्चूर्णेन तस्या नितम्बिन्या अस्थिमज्जा भाविताभूत्तथा त्वमपि कल्पद्रुचिन्तामणितुल्येन त्वत्समीहितार्थदायकेन दृष्टफलेन धर्मेणात्मानं भावय। निश्चलं धर्मरागं स्वचित्ते कुरु "। इत्युक्ते सा श्रीदत्ता तस्यैव मुनेः पार्श्वे शुद्धसम्यक्त्वमूलं गृहस्थधर्मं प्रतिपेदे। तदनन्तरं मुनिरप्यन्यत्र विजहार। श्रीदत्तापि गृहं गत्वा निजं धर्मं विधिवत्पालयामास। अन्येद्युः कर्मपरिणामवशात्सा श्रीदत्तेदृशं संदेहं स्वचित्ते चकार—" अमुं जिनधर्ममहं प्रयत्नतः करोमि, परमस्य धर्मस्य किमपि फलं भविष्यति न वा ? " इति विचिकित्सां कृत्वायुःक्षये मृत्वा सा श्रीदत्ता स्त्री यत्रावतीर्णा, तत्स्थानं श्रूयताम्—

अत्रैव विजये वैताढ्यगिरौ सुरमन्दिरनाम्नि पुरे कनकपूज्यो नाम राजाभूत्। तत्प्रिया वायवेगानाम्नी बभूव।

" भो भव्याश्चिन्तामणिकल्पद्रुकामगवीसदृशो धर्मः सर्वदा कर्तव्यः। तथा चायं धर्मः श्रुतशीलकुलादिभिः सम्यक् परीक्ष्यः। अपरीक्षितो धर्मो न कर्तव्यः। यथा वैद्यकशास्त्रोक्तं क्षीरपानं गुणकारकं श्रुत्वा कश्चिन्मूढमतिरविचार्यार्कक्षीरपानं करोति। तदा तस्यांत्रसाटादि (आंत्राणां शरीमध्यवर्तितन्तूनां साटस्तदादिः )महान् दोषो जायते । यदि कोऽपि विचार्य सुरभीदुग्ध पिबति, तर्हि तस्य बलपुष्टिकरं स्यात् । अतः कारणाद्विचार्य धर्मो विधेयः । अपरमपि कार्यमविचार्य कृतं दोषाय भवति । किंवत् ? अमृताम्रविनाशकादिनरेन्द्रवत्। यथामृताम्रविनाशकादिनृपाणां पश्चात्तापो बभूव, तथान्येषामपि भवति "। इत्युक्ते क्षेमंकरजिनपार्श्वे सभास्थितैः सर्वैरपि जनैरिति पृ-ष्टम्—' तेषामविचारितकारिणां कथं दोषो जज्ञे ? '। इत्युदीरिते श्रीतीर्थंकरः प्राह—" भोः श्रूयतां तदाख्यानम्—

मालवकदेशे उज्जयिनी भूमसिद्धा पुर्यस्ति । तत्र जितशत्रुनामा नृपः । तत्प्रिया विजयश्रीनाम्नी बभूव । तया पट्ट-राज्ञ्या सह राजा सुखेन राज्यं पालयामास । एकदा स राजा सभायामुपविष्टोऽस्ति । एतावता प्रतीहारेण तत्रागत्य नृपाग्र इति वि-ज्ञप्तम्—' हे स्वामिन् भवदीयमन्दिरद्वारे चत्वारः पुरुषा रूपश्रिया राजसुतप्रायास्त्वद्दर्शनसमुत्कण्ठिताः प्रवर्तन्ते "। इत्युक्ते भूपः प्राह—' भोः प्रतिहार तान् शीघ्रमाकारय '। तदानीं दावारिकवाक्येन ते चत्वारोऽपि नृपसभायां समागत्य प्रणामं कृत्वा विनय-नम्रतया स्थिताः । तदा नृपेण तेषामासनदानादिप्रतिपत्तिं विधाप्य तत्संमुखं विलोक्य स्वचित्त इति चिन्तितम्—' नूनमेते सुवंशजा भवन्ति '। इति विमृश्य तांबूलादिप्रदानेन तान् संमान्य तदनन्तरं तत्पार्श्वे राज्ञेति पृष्टम्—' भो यूयं कुतः समागताः ? कोऽर्थोऽ-स्ति भवताम् ? '। इति पृष्टे तेषां मध्ये यो कनिष्ठोऽस्ति, स प्रोवाच—" हे देवोत्तरापथे सुवर्णतिलकं नाम प्रवरं पुरं वर्तते । तत्र वैरिमर्दनो नाम राजाऽभूत् । तस्य प्रिया चारुरूपवती नाम बभूव । तत्कुक्षिसंभवाः क्रमेण चत्वारस्तनयाः संजाताः । तेषां क्रमेणेमानि

## ॥ अथ चतुर्थः सर्गः ॥

इतश्च जंबूद्वीपमध्ये पूर्वविदेहे सीतोदानदीतटे मङ्गलावतीविजये रत्नसंचया नाम सिद्धान्तोक्ता शाश्वती पुरी वर्तते । तत्र क्षेमकारकः क्षेमंकरो राजा जज्ञे । परंतु स तीर्थकृद्बभूव । तस्य भूपस्य रत्नमाला नाम प्रिया सञ्जाता । इतश्चापराजितजीवो द्वाविंशतिसागराण्यायुः प्रतिपाल्याच्युतेन्द्रपदाच्च्युत्वा तस्याः कुक्षौ पुत्रत्वेनावतीर्णः । तदा तया देव्या सुखशयनीयसंसुप्तया रात्रौ गजाद्याः शिखिप्रान्ताश्चतुर्दश महास्वप्ना दृष्टाः । तदनु पञ्चदशमे स्वप्ने वज्रदर्शनं बभूव । ततः परं ते हृदयेऽवधार्य प्रभातसमये स्वभर्तुः कथिताः । तदा तेन क्षेमंकरराजेन स्वधिया तान् स्वप्नान् विचार्येत्युक्तम्—'प्रिये एतत्स्वप्नप्रभावान्महान् पुत्रो भविष्यति'। इत्युक्ते सा राज्याह्लादिता । तदनन्तरं परिपूर्णसमये शुभग्रहलग्नसंयोगे पुत्ररत्नं राज्या सुषुवे । तदनन्तरं दासीभिः क्षेमंकरनृपस्य यदा पुत्रजन्मवर्धापनिका प्रदत्ता, तदा नरेन्द्रेण हर्षोत्कर्षतस्तासामाजन्मावधि आजीविकायोग्यं पारितोषिकं दानं दत्तम् । ततः स्वगृहे महीभुजा महान्महोत्सवः प्रारब्धः । देव्या पञ्चदशं स्वप्नं वज्रायुधं दृष्टं तदनुसारेण नामस्थापनासमये राज्ञा वज्रायुध इति तस्य पुत्रस्य नाम प्रदत्तम् । ततः क्रमेण धात्रीभिर्लाल्यमानः स पुत्रो यावताष्टवर्षप्रमाणो जातस्तावता कलाचार्यसमीपे कलाभ्यासं कर्तुं मुक्तः। क्रमेण सकलाः कला अधीताः । यौवनं वयः प्राप्तम् । ततः परं पित्रा प्रवररूपवतीं लक्ष्मीवतीं नाम राजकन्यां समहोत्सवं परिणायितः । तदनन्तरं कियता कालेनानन्तवीर्यजीवोऽच्युतकल्पाच्च्युत्वा वज्रायुधकुमारपत्नीलक्ष्मीवत्याः कुक्षौ समुत्पन्नः, परिपूर्णसमये जातः । सहस्रायुध इति तस्य नाम विनिर्मितम् । सोऽपि क्रमेण संप्राप्तयौवनः सन् कनकश्रियं नाम नृपसुतां विवाहितः । ततः परं

भीता जनापवादस्य ये भवन्ति जितेन्द्रियाः । अकार्यं नैव कुर्वन्ति ते महामुनयो यथा ॥२॥"

इति विमृश्य वत्सराजेन ध्यातम्—"राज्ञा प्रोक्तमस्ति परंत्वहमीदृशमकृत्यं कथं करोमि ? । नृपादेशोऽपि दुर्लङ्घ्य एव । तथापि कालविलम्बो विधीयते । बुधैः कालक्षेपोऽप्यशुभनिवारणाय प्रोक्तः" । इति चिन्तयित्वा भूपसमीपे समागत्य स एवं प्राह—"हे स्वामिन् स देवराजोऽद्यापि जागर्ति । जाग्रत् केनाप्येष हन्तुं न शक्यते । अतः कारणान्निद्राभरे समागते तमहं मारयिष्यामि" । इत्युक्ते राज्ञा तद्वचः प्रतिपन्नम् । तदा वत्सराजेनोक्तम्—"भो वेलानिर्गमहेतवे यूयं कथामेकां कथयत । अथवा कथ्यमानां कथां यूयं सावधानाः शृणुत" । इति निर्दिष्टे भूपेनोक्तम्—'भो भद्र त्वमेवाख्यानं समाख्याहि' । इत्यादेशं प्राप्य वत्सराजः कथां कथयितुमारेभे—

इहैव भरतक्षेत्रे पाटलीपुरनामकं पुरमस्ति । तत्र प्रतापवान् नयविनयादिगुणसमलंकृतः पृथिवीराजनामा नृपो बभूव । तस्य प्राणवल्लभा सुभगा नाम राज्ञी जाता । तस्मिन्नगरे निर्मलाचारः सुविचारः कृपाधारः श्रेष्ठी रत्नसाराभिध आसीत् । तत्पत्नी ऋजुकानाम्नी समजनिष्ट । तत्कुक्षिसंभवः पवित्रचरित्रवान् धनदत्तनामा पुत्रोऽभूत् । एकदा स श्रेष्ठिसुतः शैशवमतिक्रम्य कलाभ्यासं कृत्वा यौवनवयः प्राप्य सारशृंगारं विधाय मित्रबान्धवपरिवृतो मन्दिरान्निर्गत्य केनाप्यर्थेन मार्गे गन्तुं प्रवृत्तः । तदा केनापि तं दृष्ट्वेति प्रोक्तम्—'असौ श्रेष्ठिनन्दनो धन्यः । य एवंविधं सुखं स्वेच्छया विलसति' । इत्युक्तेऽन्येन भणितम्—"भो मुग्धास्य प्रशंसां किं करोपि ? । यः पुमान् जनकोपार्जितां लक्ष्मीं भुंक्ते स कापुरुष एव । स प्रशस्यते, यो निजभुजोपार्जितं वित्तं भुंक्ते ददाति च । अन्यथा का प्रशंसा ? । यत उक्तम्—

नामानि प्रदत्तानि—प्रथमो देवराजो द्वितीयो वत्सराजस्तृतीयो दुर्लभराजश्चतुर्थः कीर्तिराजः । ततः परं ते चत्वारोऽपि पित्रा कलाभ्यासं कारिताः । क्रमात्तारुण्यवयः प्राप्ताः । ततश्चानुरूपाः कन्या विवाहिताः । एकदा स राजा विषमरोगार्दितो बभूव । तदा ज्येष्ठसुतं देवराजाख्यं राज्ये संस्थाप्य यथोचितां हितशिक्षां तस्मै दत्त्वा परलोकमापन्नः । ततः परं देवराजोऽपि स्वराज्यं कियत्कालं पालयामास । ततोऽनन्तरं बलिष्ठैर्दायादैरेकत्र संभूय बलात्कारेण देवराजस्य राज्यं गृहीतम् । तथा स सबान्धवोऽपि देशान्निष्कासितः । हे देव सोऽयं देवराजो लघुभ्रातृपरिवृतो युष्मत्समीपे सेवां कर्तुं समाययौ ” । इत्युक्ते महर्षितो राजा प्राह—‘ यद्यूयं मम पार्श्वे समागतास्तद्भव्यं कृतम् । सतां सन्तः शरणम् ’ । इति निगद्य प्रतिहारं समादिश्य राज्ञा गृहोपकरणसमन्वितः प्रवरावासस्तेषां निवासाय समर्पितः । तदनन्तरं ते चत्वारोऽपि सुसेवकाः स्वामिभक्तितत्पराः प्रसादपूर्वकं राज्ञा स्वांगरक्षकाः कृताः । विशेषेण रात्रौ ते चत्वारोऽपि सुसेवकाः प्रतिप्रहरं क्रमेण गृहीतायुधाः सन्तः प्रसुप्तस्य नृपस्य शरीररक्षां कुर्वन्ति । अन्यदा ग्रीष्मकाले देवराजो नृपतिमनुज्ञाप्य क्वापि समीपस्थे ग्रामे केनापि कार्येण गतः । तत्र गत्वा कार्यं कृत्वा यावता स मध्याह्ने पश्चाद्वलितस्तावता मार्गान्तराले महारौद्रा प्रवरा वातमण्डली समुत्थिता । प्रचण्डपवनोऽभूत् धूलिरुच्छलिता । कर्कराः पतिताः । पत्रतृणानि व्योम्नि भ्रेमुः । जलदवृष्टिर्बभूव । गर्जितरवः सुतरां संजातः । दृष्टिसन्तापकारिणी विद्युत्तदा विललास । एतावता धूलिजलक्लान्तोऽसौ देवराजः क्षणमात्रं यावता वटपादपं समाश्रित्य तस्थौ, तावता तत्रस्थेन वटोपर्येवंविधं श्रुतम् । तदा तेन हृदि चिन्तितम्—‘ किमिदं को जल्पति ? ’ इति विचिन्त्य सावधानो भूत्वा भाषाविशारदः सन्नीदृशं पैशाचिकं वचः श्रोतुं लग्नः । कीदृशम्—

“ फो फो जाणसि किंची सो भणइ नो कहदि मह किं तं ।

मानायितः। जलवातादिप्रदानेन स्वस्थीकृत्य स कीरः श्रेष्ठिना प्रबोधितः। तदा कीरेण मुखात् फलं विमुच्य मनुष्यवाण्या प्रजल्पितुमारेभे—"भोः सार्थनाथ त्वया सर्वोपकारप्रवरः सांप्रतं मम जीवितोपकारः कृतः। पुनरपि जीवितं ददता त्वया वृद्धौ दृष्टिहीनौ मदीयौ मातापितरावपि जीवापितौ। ततः कारणान्महोपकारकारिणस्तवाहं कीदृशमुपकारं करोमि ?। तथापि मत्समानीतं चूतफलमिदं त्वया गृह्यताम्"। तदा सार्थपतिः प्राह—"भोः शुकराजाहमेतेनाम्रफलेन किं करोमि ? त्वं भक्षय। अन्यदपि तव शर्कराद्राक्षादिकं भक्ष्यं यच्छामि"। तदा शुकेन पुनः प्रोक्तम्—"भोः सार्थाधीशैतत्फलमनेकगुणकारकं दुष्प्रापं प्रवर्तते। एतस्य फलस्य संबन्धं शृणु—

अत्रैव भरतक्षेत्रे विन्ध्यनामा महागिरिर्विद्यते। तत्समीपे जगत्प्रसिद्धा विन्ध्याटवी वर्तते। तत्रैकस्मिन् द्रुमे कीरमिथुनं तिष्ठति। तत्पुत्रोऽहं ज्ञेयः। तौ मत्पितरौ क्रमेण वृद्धभावेन जराक्रान्तौ लोचनाभ्यां न पश्यतः। तदाहमेव भक्ष्यमानीय तयोर्ददामि। एतावत्येकस्मिन् प्रस्तावे तस्यामेवाटव्यां चूतवृक्षशाखायामहमुपविष्टोऽस्मि, तावत्तत्र मुनियुग्मं चैकं समागतम्। तेन साधुयुग्मेन दिशोऽवलोक्य कृत्वा निर्व्यञ्जनत्वादीदृशी वार्ता कृता—"समुद्रमध्ये कपिशैलस्य शृंगे सदाफलः सहकारद्रुमोऽस्ति। तस्यैकमपि फलं य एकवारं भक्षयति, तदंगतः सर्वे व्याधयो नश्यन्ति। अकालमरणं जराजीर्णत्वं तस्य न भवति। सौभाग्यं तथा प्रवरं रूपं शुभा कान्तिस्तस्य जायते। इति वचः समाकर्ण्य मया चिन्तितम्—'मुनिभाषितं कदाप्यसत्यं न भवति। ततः कारणात्तत्फलं समानीय मम मातापित्रोर्यदि ददामि, तर्हि तौ तारुण्यावस्थौ सुलोचनौ भवतः'। भोः सार्थेशेति चिन्तयित्वा मया तत्र गत्वा तत्फलं समानीतमस्ति। त्वं गृहाण। अहमन्यत्फलं समानीय पित्रोर्दास्ये"। तदानीं श्रेष्ठिना शुकाग्रहेण तत्फलं समाददे। शुकः पक्षी पुन-

मातुरस्तन्यं पितुर्वित्तं परेभ्यः क्रीडयार्जनम् । पातुं भोक्तुं च दातुं च बाल्य एवोचितं यतः ॥१॥"

इति श्रुत्वा स श्रेष्ठिसुतः स्वचित्ते चिन्तयामास—" अनेनेर्ष्यापरेण जल्पितं, परं मम हितं चैतत् । ततोऽहं देशान्तरं गत्वा यदि धनमुपार्जयामि, तर्हि सत्पुरुषो भवामि, नान्यथा "। इति विचिन्त्य स्वविमृशना मित्रवर्गाग्रे निगदिता । तदा मित्रैरपि प्रशंसितः । ततः परं स्वपितुः पादं प्रणिपत्य महताग्रहेण जनकं प्रतीति जगाद—' हे तात मया त्वदादेशेन द्रव्योपार्जनकृते परदेशे गन्तव्यम् '। इति वचः श्रुत्वा स श्रेष्ठी वज्राहत इव बभूव । तदा श्रेष्ठिना निगदितम्—" वत्स पुरापि धनं घनं विद्यते । त्वं स्वेच्छया देहि, भुंक्ष्व । उपार्जनप्रयासेन किं करिष्यसि ? । देशान्तरे वेलायां भोजनं न लभ्यते । क्वापि जलमपि न प्राप्यते । तादृशां शयनासनादि न भवति । त्वं तु सुकुमालशरीरः प्रवर्तसे "। इति पितृवचः श्रुत्वा पुनः पुनः प्राह—" हे तात युष्मदुपार्जिता लक्ष्मीर्मम जननीसमा शौर्यं विना भोक्तुं न युक्ता "। इत्यादिवचनानि जजल्प । तदनन्तरं महताग्रहेण स श्रेष्ठिसुतः पितुरादेशं प्राप्य समस्तां वाहनादिसामग्रीं विधाय क्रयाणकानि गृहीत्वा पाथेयसामग्रीं कृत्वा सुसार्थसहाययुक्तः श्रेष्ठिदत्तां शिक्षां चित्तेऽवधार्य शुभवासरे प्रयाणं चक्रे । ततः परमविच्छिन्नप्रयाणैः स श्रेष्ठिसुतः ससार्थोऽपि कियद्दिनैः श्रीपुरं नाम नगरं प्राप्तः । तत्र सरोवरसमीपे सार्थः स्थितः । तथा स सार्थेशोऽपि रम्ये पटकुटीगृहे तस्थौ । तावता प्रकंपमानशरीरो भयभ्रान्तलोचनः कश्चित् पुमान् श्रेष्ठिसुतस्य धनदत्तस्य शरणमाश्रितः । तदा तेनोक्तम्—' मा भैषीः । परं कथय, कीदृशमपराधं कृत्वा मत्समीपे समागतोऽसि ? '। यावदेति पृच्छति, अत्रान्तरे हत हतेति वदन्त आयुधं दधानास्तलारक्षनरास्तत्रैत्य सार्थवाहं प्रतीति वदन्ति स्म—" भो अयं भूपतेर्दारा उत्तमं नृपाभरणं गृहीत्वा द्यूतकारसन्निधौ हारयामास । ततः परं तदाभरणस्वरूपं विलोक्यास्माभिर्नृपाग्रे विज्ञप्तम् । तदा राज्ञा द्यूत-

ईदृशीं कथां कथयित्वा द्वितीयप्रहरे व्यतीते स वत्सराजो गतः। तावता तृतीयो भ्राता दुर्लभराजः समाययौ। तदा राज्ञा स्वचित्ते चिन्तितम्—'वत्सराजेनापूर्वा कथा कथिता। परं मत्कार्यं न कृतम्'।

अथ दुर्लभराजं यामिकत्वे समागतं ज्ञात्वा नृपेण तं प्रत्युक्तम्—'भो दुर्लभराज मम कार्यमेकं करिष्यसि?'। तेनोक्तम्—'करिष्ये'। तदा नृपः प्राह—'त्वद्भ्रातरं देवराजं हत्वा शिरः समानय'। इत्युक्ते सोऽपि सविस्मयो बहिर्गत्वा क्षणान्तरेण पश्चाद्वलित्वा नृपाग्र इति समाख्यातवान्—'सांप्रतं द्वावपि ममाग्रजौ जागरूकौ स्तः। क्षणं विलम्ब्य कार्यं करिष्ये। भोः स्वामिन् वेलानिर्गमकृते तावत्कथामेकां कथयन्तु वा शृण्वन्तु भवंतः" इत्युक्ते नृपेण भणितम्—'त्वमेव कथां कथय'। तदा दुर्लभराजः प्रोवाच"—

अत्रैव भरतक्षेत्रे पर्वतोपरि राजपुरं नाम पुरमस्ति। तत्र शत्रुदमननामा भूपतिरासीत्। तस्याग्रमहिषी रत्नमालानाम्नी बभूव। अन्यदा सभास्थितस्य तस्य भूपस्य संनिधौ प्रतीहारनिवेदितो बटुरेकः समागतः। परं राज्ञो व्यग्रत्वेन स उपविश्य स्थितः। तदनन्तरं क्षणान्तरेण नृपः सभां विसृज्य श्रमापहमभ्यंगस्नानादिकं कृत्वा देवपूजां कर्तुं भव्यस्थान उपविष्टः। तदा स पुष्पबटुर्देवार्चनाय भूपस्य पुष्पाण्यर्पयामास। तदा राज्ञा तस्य समीपे पृष्टम्—'भो भद्र त्वं कः? कुतः समागतः!'। इति पृष्टे सोऽवदत्—"भो राजन्मत्स्वरूपं शृणु—अरिष्टपुरे यज्ञदत्तद्विजपुत्रः शुभशंकरनामा विप्रोऽहं देशान्तरकौतुकानि विलोकयितुं परिभ्रमन्नत्र त्वत्समीपे समागतोस्मि"। इत्युक्तं प्रकृत्या विनीतं मधुरभाषितं सुन्दरस्वभावं तं विज्ञाय राज्ञा स बटुः स्वसमीपे रक्षितः। स निश्चिन्ततया तत्र स्थितः। यतः

न्नैनस्तत्र उत्पपात । एतावता श्रेष्ठिना चिन्तितम्—" एतत्फलं यदि कस्मैचिन्नरेन्द्राय प्रदीयते, तर्हि बहूनामुपकारो भवेत् । मया भ-
क्षितं तदा किम् ? न भक्षितं तदा किम् ? "। इति ध्यात्वा तेन तदाम्रफलं भव्यस्थाने गोपितम् । तदनन्तरं कियद्भिर्वासरैस्तत्प्र-
वहणं परकूलं संप्राप्तम् । तदा श्रेष्ठिनन्दनः प्रवहणादुत्तीर्योपायनं गृहीत्वा भूपतिपार्श्वे ययौ । उपायनं ढौकितम् । तत्कीरदत्तं सह-
कारफलं राज्ञः करे समर्पितम् । तदा राज्ञा सविस्मयेन पृष्टम्—' भो व्यवहारिन् किमेतत्फलम् ? '। तदा सार्थपेन नृपाग्रे फलस्य
परमार्थः कथितः । तत्र राजा भृशं संतुष्टः सन् समस्तमपि शुल्कं तस्य मुमोच । तदा स श्रेष्ठी महाप्रसादमिति निगद्य स्वस्थानं ग-
त्वा प्रवहणस्थं क्रयाणकं विक्रीयापरं भाण्डं गृहीत्वा ततः परं गम्भीराख्यं पुरं समागत्य पुनरपि तामेव कादम्बरीं महाटवीं गत्वा तत्र
धारां दत्त्वा स सार्थेशः सलोकस्तस्थौ । एतावता रात्रौ तत्र सार्थलोकेषु भाण्डसमूहं परितः सुप्तेषु यामिकेषु जाग्रत्सु पाश्चात्यरजन्यां हत
हतेति शब्दमुच्चरन्ती अकस्माद्भिल्लधाटी प्रकटीबभूव । तावता सार्थवाहोऽपि संनह्य सुभटपरिवृतस्तया सह यावता योद्धुं ढुढौके, तावता
सार्थेशबन्दी एवं पपाठ—' भोः स्थिरचित्त धनदत्त त्वं जय '। तदा धाटीस्वामिना पल्लीशेन पूर्वोपकारिणो धनदत्तस्याभिधानं भट्टमुखा-
च्छ्रुत्वा सशंकितेन तेन युद्धं कुर्वन्तः स्वपत्तयो निवारिताः । तदनन्तरं स स्वयं शस्त्रविरहितस्तस्य सार्थपतेर्मिलनाय संमुखमाययौ ।
तथा धनदत्तोऽपि तं विज्ञाय ससंभ्रमं तं प्रोवाच—' अहो कृतज्ञशिरोमणे तव कुशलं वर्तते ? '। इत्युक्ते तौ परस्परं समालिङ्ग्यैक-
त्रासन उपविष्टौ । सार्थपतिस्ताम्बूलादिकं प्रददे । ततः पल्लीशः क्षेमवार्तां पृष्ट्वा सार्थेशाग्र आत्मानं निन्दितुं लग्नः—" हा मयाऽज्ञान-
तोऽनेन कीदृश्ययुक्तिः कर्तुं समारब्धाभूत् । अथ ममापराधं क्षमस्व । प्रसादं कृत्वा मम पल्लीमध्ये समागच्छ "। इत्युक्त्वा महाग्रहं कृ-
त्वा पल्लीशेन स व्यवहारी सार्थसहितोऽपि स्वपल्लीमध्ये समानीतः । तदनन्तरं स्वगृहे नीत्वा स्नानभोजनवस्त्राद्यैः संमान्य मुक्ताफ-

द्विकर्णस्य च मंत्रस्य ब्रह्माप्यन्तं न गच्छति ॥ १ ॥

इत्युक्ते राजा प्राह—'भोः शुभंकर यद्येष मंत्रः स्फुटिष्यति, तर्हि लोकमध्ये ममाश्लीकवादिकलङ्को जनिष्यति'। तदा शुभंकरः प्रोचे—"हे प्रभो त्वया किमेतन्न श्रुतम्? यतः—साधौ समर्पितं गुह्यं राह तेन तु दह्यते"। इति निगदिते राज्ञश्चित्ते विश्वासोऽभूत्। ततः परं नृपशुभंकरौ केसरिणं समादाय सैन्यमध्ये समागतौ। स बटुः सैनिकानामग्रे मञ्जुमतापमेन वर्णयामास—'यस्य नादेन मत्तद्विपा अपि मदं त्यजन्ति, स केसरी स्वामिना लीलयैव हतः'। इति श्रुत्वा सर्वेऽपि सामन्तप्रमुखाः श्लाघाभ्यग्रत्कृताः प्रमोदं प्राप्ताः। नगरमध्ये वाद्यनिर्घोषपूर्वं महतोत्सवेन प्रवेशो नृपस्य बभूव। जनाः स्थाने स्थाने संमील्य नृपस्य पौरुषं वर्णयन्ति। तस्मिन्महोत्सवमये दिने शीघ्रमेव व्यतीते सति राजा तत्रास्थितं जनं विसृज्य देव्याः सदनं ययौ। तदा देवी पप्रच्छ—'राजन् पुरेऽद्य कीदृशो महोत्सवः संजायमानोऽस्ति। तूर्यनिर्घोषोऽतीव श्रूयते'। इत्युक्ते राजा प्राह—'मया महान् केसरी हतः। अतः कारणात्पौरैर्वर्धापनमहोत्सवो विहितः'। इति श्रुत्वा सा देवी पुनर्नृपं प्रत्यूचे—'हे नाथ सुवंशजस्य तव किमेतत्स्वकीयं वृथा प्रशंसनं कर्तुं युज्यते?'। तदा नृपेणोक्तम्—'वृथा कथम्?'। पुनर्देवी प्राह—'स्वामिन् शुभंकरबटुना सिंहो हतः। संवर्धनमहः प्रभुणा कार्यते, एतत् किम्?' इति श्रुत्वा राजा क्रुद्ध इति दध्यौ—"तेन दुरात्मना ममाग्रे इत्यमुक्तं 'गुह्यं कस्यापि न कथयिष्ये' अधुनैव देव्याः पुरः स्वोत्कर्षः प्रकाशितः। तदयं मर्मज्ञापकः प्रच्छन्नतया मया मारणीय एव"। इति विचिन्त्य नृपेण कस्याप्यारक्षकस्येति शिक्षा दत्ता—'अयं बटुर्भवता हन्तव्य एव'। तदा तेन नृपादेशं प्राप्य तत्क्षणमेव तं हत्वा नृपस्य निवेदितम्—

शूरस्त्यागी प्रियाभाषी कृतज्ञो दृढसौहृदः ।
विज्ञानी स्वामिभक्तश्च स सर्वगुणमन्दिरम् ॥ १ ॥

स शुभंकरबटुर्नृपगौरवादन्तःपुरादिष्वस्खलितो बभूव । एकदा तस्य नगरस्य समीपप्रदेशे सिंहः समाययौ । तदा व्याधेनैकेन समागत्य नृपस्योक्तम् । तदा नृपोऽपि चतुरङ्गिणीसेनासमन्वितः शुभंकरबटुना सह मृगेन्द्रवधार्थं नगराद्विनिर्गत्य व्याधदर्शितमार्गेण यत्रोद्याने स सिंहोऽस्ति, तत्र गत्वा वनाद्बहिः सर्वसैन्यं संस्थाप्य स्वयं तु कुञ्जरमारुह्य शुभंकरं पुरस्कृत्य यावत् केशरिणः सन्निधौ ययौ, तावत् स सिंहोऽपि मुखं विदार्य क्रमं सज्जीकृत्य पार्थिवोपरि पतनायाम्बर उत्पपात । तदा शुभंकरो मत्स्वामिनः पीडा मा भवत्विति व्योमनिपतितं सिंहमङ्कुशं मुखे क्षिप्त्वा जघान । तदानीं राज्ञा प्रोक्तम्—"भोः शुभंकर त्वया भव्यं न कृतम् । अयं सिंहो मया हन्तुं चिन्तितोऽभूत् । परं त्वया चापल्यादन्तरा हतः । अरे अद्य न केवलं त्वया मृगारिर्निहतः । सर्वनरेन्द्राणां मध्ये निश्चयेन मम यशोऽपि हतम्" । इत्युक्ते स बटुः प्राह—"हे देव भवच्छरीरकष्टाभिशङ्कया मयायं केशरी निहत, परं न स्वोत्कर्षकाम्यया निहतः । तथा च यदयं केसरी मया निहतः, स स्वामिप्रभाव एव, अन्यथाङ्कुशप्रहारेण हरिः कथं हन्तुं शक्यते ? । तथा सैनिकानामग्र इत्थमेव कथयिष्ये—यदयं मृगेन्द्रो नृपेणैव हतः । एतत्कृते हे स्वामिन् ममोपरि कुप्रसादं वृथा मा कुथाः । इदं कार्यं त्वावयोरेव प्रत्यक्षमस्ति, न त्वन्येषाम् । चतुःकर्णस्याप्यस्य मंत्रस्य भेदो न भविष्यति । यत उक्तम्—

षट्कर्णो भिद्यते मंत्रश्चतुःकर्णो न भिद्यते ।

इहैव भरतक्षेत्रे महापुरनगरे शत्रुञ्जयो नाम नृप आसीत्। तस्य प्रियंगुनाम्नी प्रिया बभूव। एकदा कश्चिद्देशान्तरीयपुमान् जातिविशुद्धं घोटकमेकं समादाय तस्य नृपस्य ढौकयामास। तदा राज्ञा चिन्तितम्—"रूपश्रियायं तुरंगमः प्रशस्यतमो दृश्यते। परंत्वस्य गतिर्विज्ञोक्यते। यत उक्तम्—

**जवोऽश्वशक्तेः परमं विभूषणं, त्रपाङ्गनायाः कृशता तपस्विनः**

**द्विजस्य विद्यैव मुनेरपि क्षमा, पराक्रमः शस्त्रबलोपजीविनाम् ॥ १ ॥"**

अतस्तस्य तुरगस्य पृष्ठे पर्याणमारोप्य तमारुह्य गतिविज्ञानहेतवे यदा नृपस्तं वाहयामास, तदा पवनवेगात्स तुरगस्तथा प्रचलितः, यथा सर्वमपि सैन्यं पश्चात् पतितम्। राजैकाकी तुरगेण निष्कासितोऽदृष्टो बभूव। तदा स वणिक् सामन्तानामित्याचख्यौ—'तदा मम विस्मृतं, परंत्वसौ तुरगो विपरीतशिक्षोऽस्ति'। इत्युक्ते नृपसेवकाः सवेगतुरंगमानारुह्य भक्ष्यजलादिकमादाय नृपपृष्ठे जग्मुः। इतश्च राजा तस्य हयस्य रावेगत्वं ज्ञात्वा यथा यथा रक्षणाय वल्गामाकुञ्चयति, तथा तथा विशेषेण स हयः प्रचलति। एवंप्रकारेण तेन विपरीतशिक्षितेन बह्वी भूमिरतिक्रान्ता। नृपकरयोर्वल्गामाकृष्याकृष्य रक्तस्रावो बभूव, तथापि स न तिष्ठति। तदा श्रान्तेन नृपेन वल्गा शिथिलैव मुक्ता, तदा तत्रैव स्थितः। तदानीं राज्ञा स विपरीतशिक्षो ज्ञातः। एतावता स नृपस्तुरगादुत्तीर्य पर्याणमपनयति स्म। तावता संजातत्रोटः सन् सोऽश्वः पृथिव्यां पतित्वा मृतः। अथ तस्यां भीमाटव्यां दवदग्धवनान्तर तृषाक्षुधापीडितो नृपतिरेकाकी बभ्राम। तत्र वनमध्ये भ्रमन् स राजा दीर्घशाखं विस्तीर्णं वटमेकं दृष्ट्वा खिन्नः सन् गत्वा तस्य

'स्वामिन् युष्मदादिष्टं कार्यं कृतमस्ति'। इत्युदिते राजा हृष्टः। एतावतान्येद्युर्देवी नृपं पप्रच्छ—'स्वामिन् सांप्रतं स बटुर्न दृश्यते। क्व गतः?'। तदा नृपतिरुवाच—'हे प्रिये तस्य दुष्टस्य नामापि न ग्राह्यम्'। पुनस्तयोक्तम्—'हे नाथ तेन तव किं विनाशितम्? स गुणवान् कौतुकी बभूव'। तदा राज्ञा तत्स्वरूपं कथितम्। तदा देव्या निगदितम्—"हे नाथेदं सिंहमारणं तेन बटुना ममाग्रे न समाख्यातम्। किं तु मयैव कौतुकेन सप्तभूमिके प्रासादे समारूढया स्वयमेव दृष्टम्। अत्र तस्य कोऽपि दोषो नास्ति"। पुनर्देव्या पृष्टम्—'राजन् सत्यं कथय, स जीवति वा मृतः?' इत्युक्ते राजा सशोकः प्राह—"हे देवि मयात्र महत्तरमकार्यं कृतम्। यत्सर्वगुणरत्नमहोदधिर्बटुर्व्यापादितः"। एवं प्रकारेण स राजा वहीं शुचं कृत्वा यथा दुःखभाजनं जातः, तथाऽन्योऽप्यविमृष्टकारी पातकं लोकापवादं च लभते ॥

एवं कथां कथयित्वा तस्मिन् दुर्लभराजे विरते सति तृतीयः प्रहरो व्यतीतः। तदा दुर्लभराजोऽपि ततः समुत्थाय स्वसदनं ययौ। तावता चतुर्थः कीर्तिराजः समाययौ। तं प्रति राजा प्राह—'भोः कीर्तिराज मामकीनं कार्यमेकं त्वया भविष्यति न वा?'। इत्युक्ते स प्रोवाच—'स्वामिन् यद्यहं तव कार्यं न साधयिष्यामि, तर्हि तव सेवां कथं करिष्यामि?'। इति भाषिते नृपतिरुवाच—"भोः कीर्तिराज यदि त्वं मम निर्विकल्पसेवको वर्तसे, तर्हि तव भ्रातुर्देवराजस्य शीर्षं छित्वा त्वं समानय"। इत्युक्ते तथेति कृत्वा नृपमन्दिराद्बहिर्विनिर्गत्य कालविलम्बं विधाय पश्चादागत्य स धीरः पुमान्नृपं प्रत्यूचे—"हे नाथ शर्वरीप्रान्तत्वात्सर्वे यामिकास्तथा नयोऽपि मम बान्धवा जागरूकाः सन्ति। अतः कारणादसौ तवादेशः पुनः प्रस्तावे विधास्यते"। इत्युक्ते तथैव नृपादेशं लब्ध्वा स कीर्तिराजः कथां कथयति स्म—

नकाष्ठैः संस्कारं विधाय जलाञ्जलिं दत्वा स राजा निजमन्दिरं संप्राप्य शोकातुर उपविष्टः । तदा मंत्रिसामन्ताद्यैः पृष्टम्—' हे नाथ भवता पक्षिणः प्रेतकार्यं कृतं, तत्किं कारणम् ?' । तदा राज्ञा समग्रोऽपि वृत्तान्तः स्वपरिवाराग्रे निवेदितः । तदा सर्वः कोऽपि चमत्कृतः । राज्ञा प्रोक्तम्—'स पक्षी मम यावज्जीवं न विस्मरिष्यति' । इत्युक्ते सचिवसामन्ताद्यैरुक्तम्—' स्वामिन् गते शोको न कर्तव्यः ' । इत्यादिवाक्यैर्बोधितोऽपि स राजा विषादं न त्यजति स्म । यथाविमृष्टकार्यकरणात्स नृपतिः पश्चात्तापमापन्नस्तथान्योऽपि यः सहसा परमार्थमविज्ञाय किमप्यकार्यं कुरुते, स इह लोके परलोके च पराभवमाप्नोति । अतः सुन्दरबुद्धिभिः कार्यं विचार्य कर्तव्यम् ॥

एवं कथां कथयित्वा कीर्तिराजे स्थिते सति प्रभाततूर्यरवो जज्ञे । वन्दिवृन्दैर्मंगलपाठः पठितः । तदा कीर्तिराजोऽपि ततः समुत्थाय स्वस्थानं ययौ । तदा राज्ञा चिन्तितम्—'नूनमेते सर्वेऽप्येकचित्ताः सन्ति । तेन मम चिन्तितं कार्यं न जातम्' । इति विमृश्य दारयानीतजलेन वदनं प्रक्षाल्य सुवेषं परिधाय राजा यावदास्थान उपविष्टस्तावता देवराजोऽञ्जलिं विधाय तत्र समागत्य प्रसन्नवचसेति महीपतिं विज्ञापयामास—' यच्च देवो न जानाति, किंचित्तत्कथयामि ' तदा क्रुध्धेनापि राज्ञा भ्रूसंज्ञया सोऽनुज्ञातः । ततः स देवराजः पिशाचवचनश्रवणादिकां समग्रामपि कथां भयविस्मयकारिणीं नृपाग्रे प्रोचे । वासभुवनात्तत्सर्पस्य खण्डद्वयं समाकृष्य प्रतीतिनिमित्तं प्रत्यक्षमेव नृपाय दर्शितम् । तदानीं देवराजोपरि नृपचित्तविक्षेपो गतः । राजा स्वमनसीति दध्यौ—" अहो अनेन महात्मना मम जीवितरक्षणाय कीदृशं विहितम् ? । पुनर्मया पापिनायं परोपकारी पुरुषश्रेष्ठो देवराजाख्यो रभसकारित्वेन विघातयितुमारब्धोऽभूत् । परंत्वस्य बान्धवैः कथाकथनदक्षैर्वत्सराजाद्यैस्ततरसाधु विहितं, यदयं न हतः " । ततः सर्वपरिवारसमक्षं

च्छायामुपविश्य यावत्पश्चाद्विलोकनं करोति, तावता तस्यैव वृक्षस्य शाखायाः पतन्तो जलबिन्दवो दृष्टाः। तदा राज्ञा चिन्तितम्, यत्-'इदं वर्षाकालसंजनं जलं शाखारन्ध्र इयत्कालं स्थितं, सांप्रतं तत्पतति'। इति विमृश्य पलाशभाजनं कृत्वा तृषाक्रान्तेन राज्ञा तत्र निवेशितम्। क्रमेण नीलकणुपाम्बुना तत्पूरितम्। तदा राजा तद्गृहीत्वा यावत्पिबति, तावत्तत्र कश्चित्पक्षी वटपादपादुत्तीर्य तज्जलपात्रं नृपकरात्पातयित्वा तरुशाखायामुपविष्टः। पुनरपि विलक्षेण राज्ञा तथैव जलपात्रं प्रपूर्य यावत्पातुं समारब्धं, तावता पुनरपि तेन पक्षिणा तथा कृतं, तदा राजा क्रुद्धः सन्नेवं दध्यौ—'यदि स दुरात्मा पक्षी अथ समेष्यति, तर्हि मारयिष्यामि'। इति विचिन्त्यैकेन करेण कशां गृहीत्वा द्वितीयेन जलार्थं पुनः पत्रपुटं स्थापयामास। एतावता स पक्षी व्यचिन्तयत्—"अयं महीपतिः कुपितोऽस्ति। यदि पुटं पातयिष्यामि, तर्हि नूनमेष मां हनिष्यति। चेन्न पातयिष्यामि, तर्ह्यस्मिन् विषजले पीतेऽयमवश्यं मरिष्यति। ततो मम मरणं वरं, परमयं भूपालो यदि जीवति, तदा भव्यम्"। इति विमृश्य पुनरपि तेन पक्षिणा नृपकरात्तत्पत्रपुटं पातितम्। तदा कुपितेन राज्ञा कशाघातेन स पक्षी व्यापादितः। ततः प्रहृष्टचित्तेन नृपेण जलार्थं पुनरपि तत्पात्रं तत्र स्थापितम्। तदा क्रमेण तज्जलमग्रतोऽग्रतः पतति स्म। तदानीं नृपेण सविस्मयेन समुत्थाय वृक्षशाखायां चटित्वा यावद्विलोकितम्, तावत्तरुकोटरेऽजगरं ददर्श। तं वीक्ष्य राज्ञा ध्यातम्—"तज्जलं प्रसुप्तस्यास्य मुखाद्गरलं पतितम्। यदि मया पीतमभविष्यत्तर्हि निश्चयेन मम मरणमभविष्यत्। अहो तेन पक्षिणा मम निवारणा वारं वारं कृता, परं मया न ज्ञाता। हा हा मूर्खत्वेन स परोपकारी खगः परमार्थमजानता मया वृथा निहतः"। इत्थं पश्चात्तापं कुर्वतस्तस्य नृपस्य सैनिकाः समाजग्मुः। स्वस्वामिनं तत्र दृष्ट्वा ते प्रमुदिताः। तदनन्तरं नृपतिर्नीराहारादिभिः स्वस्थीभूतस्तं पक्षिणं सार्धं समादाय स्वपुरं समाययौ। तदनन्तरं पुरोद्याने स्थित्वा तस्य पक्षिणश्चन्द-

इत्यादिसर्वसम्बन्धं श्रुत्वा पुनर्नत्वा नृपः सूरिं विज्ञपयामास—"हे प्रभो अस्मात्कष्टादहं भाग्योदयेन विनिर्मुक्तः। ततो मम सांप्रतं पुण्यकार्यमेव युक्तम्"। इत्युक्त्वा नृपतिर्महताग्रहेण सूरिपार्श्वे संयमं प्रतिपद्य प्रतिबोधहेतवे श्रीसंघसमक्षं तस्यैव गुरोर्मुखादेवंविधं ज्ञाताधर्मकथाभिधं सिध्धान्तोक्तं रम्यं भाविकथानकं शुश्राव। तद्यथा—

मगधदेशे राजगृहनगरे ऋद्ध्या धनदसमानो धनो नाम श्रेष्ठी बभूव। तस्य गृहिणी धारिणी नाम संजज्ञे। तत्कुक्षिसंभवाश्चत्वारः पुत्रा धनपालधनदेवधनपतिधनरक्षितनामानः क्रमेण संजाताः। तेषां चतुर्णामपि प्रिया उज्झिकाभोगिकाधन्निकारोहिणीनाम्न्यो बभूवुः। एकदा स धनश्रेष्ठी पाश्चात्यरात्रिसमये विनिद्रश्चिन्तयामास—"वधूचतुष्टयमध्ये मम गृहभारं वोढुं का समर्था भविष्यति ?। शास्त्रविद इति वदन्ति—पुरुषेषु सर्वगुणाधारेषु सत्स्वु गृहं गृहिण्या प्रवर्तते। यत उक्तम्—

भुंक्ते गृहजने भुक्ते सुप्ते स्वपिति तत्र या।
जागर्ति प्रथमं चास्मात्सा गृहश्रीर्न गेहिनी॥ १ ॥

अतः परीक्षां करोमि। का गृहभारयोग्या वधूर्भविष्यति ?" इति विचिन्त्य स श्रेष्ठी प्रभाते सूपकाराणामिति समादेशं ददौ—'अद्य सर्वा साररसवती प्रगुणीक्रियताम्'। इत्यादेशं दत्वा सर्वं स्वजनवर्गं पौरवर्गं च निमंत्र्य स्वगृहे भोजयामास। तदनन्तरं स श्रेष्ठी समग्रमपि स्वजनलोकं वस्त्रताम्बूलादिभिः सत्कृत्य स्वजनसमक्षं पञ्च शालिकणान् दत्वा ज्येष्ठवधूं प्रतीति प्रोचे—"मया पञ्च शालिकणास्तव समर्पिताः सन्ति। पुनर्यदाहं मार्गयामि तदा त्वया समर्पणीयाः" इति कथयित्वा सा विसृष्टा। तदा तया

हृष्टेन राज्ञेति निगदितम्—" एते चत्वारोऽपि सर्वगुणास्पदं वर्तन्ते । अपुत्रस्य मम कुलदेव्येमे सुता दत्ताः । ततोऽहं देवराजं राज्ये निवेश्य वत्सराजं युवराजपदे संस्थाप्य स्वयं दीक्षां गृहीष्यामि " । इत्युक्ते परिवारलोकेन प्रोक्तम्—' हे देव कंचित्कालं प्रतीक्ष्स्व । पश्चान्मनश्चिन्तितं कुर्याः ' । इति परिवारवचः श्रुत्वा राजा प्राह—" मत्पूर्वजा अदृष्टपलिता एव व्रतं प्रतिपद्य तपस्तप्त्वा सुगतिं प्राप्ताः । अहं तु तादृशीं राज्यभारधुरं विनेयत्कालं स्थितः । इदानीं निश्चयेन समीहितं करिष्यामि " । तदनन्तरं राज्ञा दैवज्ञकथिते शुभमुहूर्ते देवराजस्य राज्यं समर्पितम् । तथा वत्सराजस्य यौवराज्यं दत्तम् । ततः परं नन्दननामक उद्यान एकदा तत्र श्रीदत्तनामा सूरिवरो बहुसाधुपरिवृतः समाययौ । तदोद्यानपालकेन समागत्य नृपाग्रे गुरोरागमने कथिते सति जगतीपतिः परया भक्त्या तत्र गत्वा तं गुरुं वन्दित्वा यथास्थान उपविश्य सद्धर्मदेशनां श्रुत्वा प्रस्तावं प्राप्य कृताञ्जलिरेवं पप्रच्छ—" हे प्रभो यत्पिशाचाभ्यां मम विपत्तिकालः प्रोक्तः परंतु न जातस्तत्किम् ? दैवज्ञनिगदितस्य वाक्यस्य कथं वैपरीत्यं जायते ?" । इति पृष्टे सूरिः प्राह—" भो राजंस्तं सम्बन्धं शृणु—

वैश्यवंशसमुद्भवा रूपवती गौरी नाम तव गृहिणी बभूव । सा केनापि कर्मदोषेण दौर्भाग्यदूषिता सती तवाप्यनिष्टा जाता । दृष्ट्वा दृष्टाऽसौख्यदायिनी बभूव । तदनन्तरं सा वैराग्यं प्राप्य पितृगृहे गत्वाऽज्ञानतपसात्मानं संशोष्य विपन्ना व्यन्तरीत्वं प्राप्ता । ततश्च सा तं पूर्वमत्सरं स्मृत्वा सर्पशरीरमधिष्ठाय तव शयनीयगृहे प्रविष्टा । तथा तव कुलदेव्या पिशाचरूपं कृत्वा देवराजस्य त्वत्कल्याणहेतवेऽयमर्थो ज्ञापितः । यद्यपि दैवी शक्तिर्मानुषाणामचिन्त्यास्ति, तथापि पौरुषं तेजस्तल्लंघने क्षमं भवति । अतः क्रूरव्यन्तरीसमाश्रितो महाविषधरोऽपि बलिना देवराजेन लीलयैव हतः" ।

च दुःखभाजनं भवन्ति, प्रथमवधूवत् । केचिदाजीविकार्थं वेषधारिणो भवन्ति, ते द्वितीयवधूसदृशाः । केचित्स्वशरीरेण व्रतं पालयन्ति, परं परेषामुपदेशं दत्वा धर्मे न प्रवर्तयन्ति, ते तृतीयवधूतुल्याः । केचिद्व्रतं प्राप्य प्रतिपालयन्ति, अन्येषां बहूनां भव्यप्राणिनां प्रतिबोधं दत्वा व्रतारोपं कुर्वन्ति, ते चतुर्थवधूसमा विज्ञेयाः । अतः कारणाद्भो राजर्षे त्वं चतुर्थवधूवद्व्रतविस्तारं कुर्याः । श्री वीरजिनकाल इदं कथानकं भविष्यति" । इति कथयित्वा श्रीदत्तगुरुणा स नृपसाधुर्विशेषेण संयमनिश्चलः कृतः । ततः क्रमेण स संयमं प्रतिपाल्य सुगतिभाग् बभूव ॥

इति च क्षेमंकरजिनेन्द्रेण प्रोक्तमहिंसादिलक्षणं धर्मं परीक्ष्य विदधीत । प्रथमं धर्मलक्षणं प्राणिदया । द्वितीयं धर्मलक्षणं सत्यवादित्वम् । तृतीयमदत्तपरित्यागः । चतुर्थं ब्रह्मचर्यप्रतिपालनम् । पञ्चमं नवविधपरिग्रहविरमणम् । इमानि पञ्च धर्मलक्षणानि विज्ञाय भो महानुभावजीवा निरन्तरं धर्मकर्मविषये प्रयत्नं कुर्वन्तु ॥

इति श्रीक्षेमंकरजिनदेशनां श्रुत्वाऽनेकशो भव्यजीवाः प्रतिबुद्धाः । श्रीजिनेन्द्रेण प्रथमगणधरादितीर्थं प्रवर्तितम् । ततः परं वज्रायुधनृपः श्रीधर्मप्रतिपत्तिं विधाय भगवन्तं प्रणम्य स्वपुरीं विवेश । अन्यदा तस्य वज्रायुधस्य पूर्वपुण्यप्रभावेण यक्षसहस्राधिष्ठितं चक्ररत्नं सुनिर्मलमायुधशालायां समागतम् । अष्टाह्निकां यावत्तस्य पूजां कृत्वा तत्समाराधितं, तावता नभस्युत्पतितम् । पश्चात्तत्पृष्ठे वज्रायुधः ससैन्यः प्रचलितः सन्मंगलावतीविजयस्य षट् खण्डानि साधयामास । ततः परं स्वपुरीं प्राप्तश्चक्रवर्तिपदवीं पालयामास । सहस्रायुधनामानं स्वपुत्रं स चक्री यौवराज्ये निवेशयामास । एकदा स वज्रायुधचक्री नृपसचिवादिसमस्तपरिवारपरिवृतः सभां समाश्रित्य यावदुपविष्टोऽस्ति, तावद्विद्याधरश्चैकः रायौवनो भयस्तत्राऽऽगत्य यावत्कम्पमानाङ्गस्तं वज्रायुधं शरणं प्रपन्नस्तावता

चिन्तितम्— “ मन्ये श्वशुरो वृद्धभावेन ग्रथिलो जातः, यत एवं पञ्चमेलापकं कृत्वा पञ्च व्रीहिकणा दत्ताः । परं ते का गोप्यन्ते? यदा मार्गयिष्यति, तदाऽपरान् शालिकणान् दास्यामि”। इति ध्यात्वा तया ते शालिकणास्त्यक्ताः। एवं द्वितीयस्याः प्रदत्तास्तदा तया चिन्तितम्—“व्रीहिकणाः किं रक्ष्यन्ते? यदा श्वशुरो मार्गयिष्यति, तदाऽन्यान् दास्ये। तया च श्वशुरदत्ताः कथं त्यज्यन्ते?”। इति विमृश्य तुषरहितान् कृत्वा तान् कणान् सा चखादति स्म। एवं तृतीयस्याश्चतुर्थ्या अपि दत्ताः। तदा तृतीयया सुवस्त्रेण बद्ध्वा निजभूषणमध्ये रक्षिताः। चतुर्थ्या तु स्वबन्धूनां समर्पिताः । वर्षासु त उप्ता उद्गता बहवो जाताः । पञ्चत्रिंशद्मूढकशतसंख्यया ते जाताः । इतश्च पञ्चमे वर्षे तेन श्रेष्ठिना पुनः सर्वस्वजनपाकार्थं संमेल्य तान् समक्षं ज्येष्ठां वधूं समाहूय व्रीहिकणा याचिताः । तदा तयाऽपरे शालिकणाः प्रदत्ताः । तदा श्रेष्ठिना प्रोक्तम्—‘इमे ते कणा न भवन्ति, ये मया दत्ताः’। ततः साऽत्याग्रहेण यदा शपथपूर्वं पृष्टा, तदा तया सत्यमुक्तम् । तदानीं श्रेष्ठी रुष्टः प्राह—“ यदि ममार्पिताः शालिकणा अनया त्यक्तास्तर्हि भस्मगोमयकचवरादि कर्मैतस्या योग्यम् । अनया तदेव कर्तव्यं, नापरम् ” । द्वितीयां समाकार्य शालिकणस्वरूपं पृष्टम् । तदा तया सत्यमेवोक्तम्—‘ मया भक्षिताः ’। तदा तस्या रसवतीप्रभृतिगृहकर्म प्रदत्तम् । तृतीयस्याः पार्श्वे याचितास्तदा तया स्वनिजभूषणमध्यस्थांस्तान् समानीय श्वशुरस्य प्रदत्ताः । तदा तस्याः सर्वसारवस्तुभाण्डागाराधिकारो दत्तः । शालिवृद्धिकारिणी चतुर्थी वधूः श्रेष्ठिना गृहस्वामिनी कृता । एवं यथायोग्येषु कर्मसु वधूचतुष्टयं नियुज्य निश्चिन्तः सन् स श्रेष्ठी स्वयं धर्मकर्मतत्परो बभूव ॥

इयं कथा चान्तरङ्गास्ति । श्रेष्ठिसदृशो गुरुः । वधूतुल्या दीक्षिताः । व्रीहिपञ्चकतुल्यानि पञ्च महाव्रतानि । स्वजनमेलापकसमानश्चतुर्विधः श्रीसंघः । गुरुः श्रीसंघसमक्षं शिष्याणां महाव्रतानि ददाति । तदैके शिष्या व्रतं त्यक्त्वा इह लोके परलोके

केवलं देवदानवमानवैर्वन्द्यमानं सुमनोनामानं मुनिवरं दृष्ट्वा शुद्धभावेन ववन्दे । तदा तेन मुनिना तं दत्तं प्रति धर्मदेशना दत्ता । तया देशनया स प्रतिबोधं प्राप । ततः स दत्तः श्रीजिनधर्ममङ्गीकृत्य दानपुण्यादि कृत्वायुःक्षये मृत्वा सुकच्छविजये वैताढ्यगिरौ महेन्द्रविक्रमविद्याधरेन्द्रतनयोऽजितसेननामा बभूव । तत्पत्नी कमलानाम्नी जाता । इतश्च नलिनकेतुः पैतृकं राज्यं प्राप्य तया प्रभं-करया स्त्रिया सह गृहवासं पालयन्नेकदा धवलगृहस्य सप्तमीं भूमिं समारूढः पञ्चवर्णैर्मेघपटलैर्व्याप्तं नभस्तलं ददर्श । तस्य पश्यत एव तन्मेघवृन्दं प्रचण्डपवनोत्क्षिप्तं क्षणात् शतखण्डं ययौ । तद्विलोक्य जातवैराग्य इति दध्यौ—"धनयौवनादिकं सर्वमपि सांसारिकं वस्तु एतद्वदस्थिरमेव । मयाऽज्ञानत्वेन परस्त्रियमपहरता क्षणमात्रसुखस्यार्थे बहुलं पापकर्म समुपार्जितम् । तत्प्रव्रज्यां प्रतिपद्य तपोनियमवारिणा पापमलविलिप्तमात्मानं निर्मलं करोमि" । इति विचिन्त्य स नलिनकेतुस्तनयं राज्ये निवेश्य नृपश्रियं परित्यज्य क्षेमंकरजिनान्तिके परिव्रज्यां समादाय विशुद्धां प्रतिपाल्य केवलं प्राप्य निःशेषकर्ममलं प्रक्षाल्य मोक्षं प्राप । सा प्रभंकरा स्त्री सुव्रतागणिनीसमीपे चान्द्रायणाभिधं तपस्तप्त्वा प्रान्ते मृत्वा सेयं तव पुत्री शान्तिमती समुत्पन्ना । अस्याः पूर्वभवभर्त्राऽजितसेननाम्ना खेचरेण विद्यासाधनं कुर्वतीयं दृष्टा । ततः पूर्वस्नेहाद्व्योममार्गेणामुनापहृता । अतः कारणादहो पवनवेगास्योपरि कोपं मुञ्च । हे शान्तिमति त्वमपि मुञ्च" ।

इति वज्रायुधचक्रिणो वाक्यं श्रुत्वा तौ विद्याधरौ सा च शान्तिमती बाला परस्परं स्वकीयमपराधं क्षामयित्वा शान्तचेतसो जाताः । पुनश्चक्री सभाजनं समुद्दिश्य समाचख्यौ—"एतेषामतीतं स्वरूपं समाख्यातम् । अथ भविष्यत्कथयामि—अमुभ्यां सहिता शान्तिमती दीक्षां गृहीष्यति । रत्नावलीतपः कृत्वाऽनशनेन विपद्य साधिकद्विसागरायुषि ईशानेन्द्रो भ-

तस्य पृष्ठे काचित्खड्गखेटकधारिणी विद्याधरी तथा गदां दधद्विद्याधरश्चैकस्तत्र समाययौ । तेन दृष्टिसमागतेन विद्याधरेण चक्रिणं प्र-
तीति भणितम्—" भोश्चक्रिन्नस्य शरणागतस्य पापात्मनः स्वरूपं शृणु—सुकच्छविजये वैताढ्ये शुक्लानाम्नी पुरी वर्तते । तस्यां
शुक्लदत्तनामा नृपोऽभूत् । तत्पुत्रः पवनवेगनामा । स चाहम् । मम प्रिया सुकान्ता । तत्कुक्षिसंभवैषा शान्तिमतीनाम्नी मम पुत्री
वर्तते । एकदा मयाऽस्यै प्रज्ञप्ती विद्या दत्ता । तां विद्यां साधयितुमियं मणिसागरपर्वते ययौ । तत्र विद्यासाधनं कुर्वत्येषा मत्सुतानेन
दुष्टविद्याधरेण हृता । अत्रान्तरे तद्भक्तिरञ्जिता सा विद्या सिध्धा । अथ तस्या विद्याया बिभ्यन्नयं युष्माकं शरणं प्रविष्टोऽस्ति ।
तत्र नगे पुत्रीमपश्यन्नहमप्यत्र समागतः । तस्मादहो राजन् मत्पुत्रीशीलभङ्गाभिलाषिणमिमं विद्याधरं त्वं शरणान्मुञ्च, यथाहमेकेन
गदाप्रहारेण हन्मि" । इत्युक्ते स वज्रायुधचक्री तदीयं पूर्वभवचेष्टितमवधिज्ञानेन ज्ञात्वा तेषां प्रतिबोधकृते प्रोवाच—' भोः पवन-
वेग तव पुत्री येन कारणेनानेन हृता तत्कारणं शृणु' । इति प्रोक्ते सर्वेऽपि सभासीनजना निजप्रभोर्ज्ञानमाहात्म्यं विज्ञाय चमत्कृ-
ताः सन्तः श्रोतुं सावधाना जाताः । ततः स चक्री प्राह—

इहैव जंबूद्वीपे ऐरावतक्षेत्रे विन्ध्यपुरे विन्ध्यदत्तनामा नृपोऽभवत् । तत्पत्नी सुलक्षणा । तत्कुक्षिसंभवो नलिनकेतुनामा
पुत्रो बभूव । तत्रैव नगरे धर्ममित्रसार्थपतेः सुतः श्रीदत्ताकुक्षिसंभवो दत्तनामा संजातः । तस्य गृहिणी मनोज्ञरूपधारिणी प्रभंकरा
नाम संजज्ञे । एकदा वसन्तसमये संप्राप्ते स दत्त उद्याने गत्वा तया भार्यया सह क्रीडति स्म । एतावता नलिनकेतुनामा नृपकुमा-
रस्तां सुन्दराकारां दत्तपत्नीं प्रभंकरां दृष्ट्वा कामातुरः संजज्ञे । ऐश्वर्ययौवनादिगर्वितेन नृपपुत्रेण कुलशीलयोः कलङ्कमविचार्य सा-
ऽपहृता । तया सह कुमारो विषयसुखं स्वेच्छया भुङ्क्ते । । इतश्चैकदा स दत्तः प्रियावियोगविधुरः सन्नुद्याने गतस्तत्र तत्कालोत्पन्न-

त्वं बालोऽसि तावत्संप्रति कलाभ्यासं कुरु । पश्चाद्विवाहसमये तस्याः पाणिग्रहणं कुर्याः " । पुनः पुत्रेण भणितम्—' यदि तात मदर्थं तत्पितुः पार्श्वे सांप्रतं त्वं याचिष्यसे, तदाहं भोक्ष्ये, नान्यथा ' । इत्युक्ते श्रेष्ठिना तद्वचः प्रतिपद्य तं संबोध्य भोजयित्वा स्वयं भुङ्क्त्वा स्वजनपरिवृतः पुरन्दरश्रेष्ठी रत्नसारश्रेष्ठिसदनं ययौ । तदा स रत्नसारश्रेष्ठयभ्युत्थानासनदानस्वागतप्रश्नपूर्वकं सविनयं प्रोवाच—' अद्य यूयं यदर्थं मम गृहे समागतास्तत्कारणं ब्रूत ' । तदा पुरन्दरश्रेष्ठी प्रोक्तवान्—' हे श्रेष्ठिन् मत्पुत्रार्थं त्वत्सुतां रत्नसुन्दरीं याचितुं वयं समागताः ' । इति श्रुत्वा रत्नसारः प्राह—" एतत्कृत्यं ममैवास्ति । इयं कन्यावश्यं मया त्वत्सुताय देया। एतद्विषये किं कथ्यम् ? । भवद्वचनं प्रमाणमेव । कन्या तावत्कस्मैचिद्दातव्या, परं यदि यूयं याचितारस्तर्हि किं विलोक्यते ? । अतः कारणादेतद्वाक्यं प्रमाणमेव । " यावता रत्नसारश्रेष्ठिनेति निगदितं, तावता सा बालिका पितुः समीपे स्थिता सहसेति बभाषे—'हे ताताहं पुण्यसारस्य गेहिनी न भविष्यामि ' । ईदृशं तद्वाक्यं श्रुत्वा पुरन्दरः श्रेष्ठयेवं दध्यौ—"अहो मम पुत्रस्यैतस्याः पाणिग्रहणाभिलाषो वृथैव । शैशवेऽपि यस्या वाण्येवंविधा कर्कशास्ति, सा यौवनोन्मत्ता सती प्रियस्य कथं सुखदा भविष्यति " । श्रेष्ठी पुरन्दरो यावदित्थं चिन्तयन्नस्ति, तावता रत्नसारेण भणितम्—" इयं मत्पुत्री मुग्धास्ति । वाच्यावाच्यं किमपि न जानाति । तदस्याः प्रजल्पितं मनसि नानेतव्यम् । हे श्रेष्ठिन्नहं तथेमां बोधयिष्यामि, यथासौ त्वत्पुत्रं परिणेष्यति " । इति वाक्यं श्रुत्वा पुरन्दरश्रेष्ठी स्वजनपरिवृतः समुत्थाय स्वगृहमागत्य तत्कथां कथयित्वेत्यवादीत्—" हे वत्स सा कन्या तवायोग्या । यतः—

कुदेहां विगतस्नेहां लज्जाशीलकुलोज्झिताम् ।

विष्यति । तथा वायुगत्यजितसेननाम्नोर्द्वयोः साधुप्रवरयोस्तदा घातिकर्मक्षये संजात उत्तमं केवलज्ञानं संपत्स्यते । तदेशानेन्द्रस्तत्र स-
विष्यति । तथा वायुगत्यजितसेननाम्नोर्द्वयोः साधुप्रवरयोस्तदा घातिकर्मक्षये संजात उत्तमं केवलज्ञानं संपत्स्यते । ततः परमीशानेन्द्रोऽप्यायुःक्षये ततश्च्युत्वा
मागत्य तयोः केवलिमहिमानं कृत्वा स्वस्याङ्गस्य पूजनं कृत्वा निजं स्थानं गमिष्यति । ततः परमीशानेन्द्रोऽप्यायुःक्षये ततश्च्युत्वा
सुकुले मनुष्यावतारं प्राप्य दीक्षामादाय कर्मक्षयं विधाय निर्वाणपदं प्राप्स्यति " ॥

एतत्समाकर्ण्य सर्वेऽपि सभासदः सविस्मयाः सन्त एवमूचुः—' अहो अस्मत्प्रभोर्ज्ञानं कालत्रितयदीपकं वर्तते ' ।

ततश्च शान्तिमती वायुवेगोऽजितसेनश्चैते त्रयोऽपि चक्रिणं नत्वा स्वस्थानं जग्मुः ॥

इतश्च सहस्रायुधकुमारस्य जयसेनाकुक्षिसंभूतः कनकशक्तिनामा पुत्रो बभूव । क्रमेण स यदा यौवनं प्राप्तस्तदा तस्य
कनकमालावसन्तसेनानाम्न्यौ सुकुलोद्भवे द्वे नार्यौ बभूवतुः । अथैकदा स कुमारः क्रीडां कर्तुमेकस्मिन् गहने वने गतः । तत्र पतनो-
त्पतने कुर्वन्तं नरमेकं दृष्ट्वा तत्पार्श्वे कारणं पृष्टम् । तदा स प्राह—" भो अहं वैताढ्यवासी खेचरोऽस्मि । मम विचरतः क्वापि
स्खलना न विद्यते । इहागत्य चिरं स्थित्वा पुनर्मम गच्छतो व्योमगामिन्या विद्यायाः पदमेकं विस्मृतम् । ततः कारणादहं गन्तुं न
शक्नोमि । एवंविधां चेष्टां कुर्वन्नस्मि " । तदा कुमारः प्राह—' भो ममाग्रे तां विद्यां पठ ' । तदा विद्याधरस्तं सत्पुरुषं मत्वा तद-
ग्रे विद्यां कथयामास । ततः पदानुसारिलब्धिप्रभावात्कुमारेण विस्मृतं पदं पूरितम् । तदानीं खेचरस्तुष्टः स्वविद्यां प्रमोदात्कुमाराय
ददौ । तदनन्तरं तत्प्रणीतविधिना कुमारेण विद्यासाधनं विदधे । ततः परं खेचरः स्वस्थानं ययौ । तथा कुमारोपि विद्याबलेन प्रिया-
द्वययुतो यदृच्छया भ्रमन्नेकदा हिमाद्रौ गतः । तत्र विपुलमतिनामानं विद्याधरमुनिं वीक्ष्य तच्चरणौ प्रणम्य प्रियाद्वययुतो यथास्थानमुपविश्य
मुनिसमीपे धर्मदेशनां शुश्राव । तद्यथा—

इति निगद्य नवीने वस्त्रे तेन श्रेष्ठिना स परिधापितः । लक्षमूल्यभूषणेन समलङ्कृतः । ततः परं धवलमङ्गलेषु जायमानेषु वह्निसाक्षिकं शुभवेलायां पुरन्दरश्रेष्ठिसुतेन ताः सप्तापि चारुकन्याः परिणीताः । तदा स स्वचित्ते दध्यौ—"अहो पित्राहं निर्वासितस्तद्भव्यं कृतम् । अन्यथा मम पुण्यस्फीतिः कथं प्रकटीभवेत् ? " । इति ध्यायन् स पाणिग्रहणं कारयित्वा वधूभिः सह श्रेष्ठिना महोत्सवपुरस्सरं स्वगृहे नीतः । प्रासादस्योपरितनभूमौ नीत्वा निवेशितः । वल्लभास्तं पर्यङ्के संस्थाप्य स्वयं विष्टरे निविष्टा इति पृच्छन्ति स्म—' हे नाथ तव कलाभ्यासः कियान् विद्यते ?' । तदा सोऽब्रवीत्—" हे मुग्धाः कला ममेष्टतरा न । यत उक्तम्—

अत्यन्तविदुषां नैव सुखं मूर्खनृणां न च ॥
अर्जनीयाः कलाविद्भिः सर्वथा मध्यमाः कलाः ॥ १ ॥ "

एतस्य श्लोकस्यार्थं यदा ता न विदन्ति, तदा विमृशनां कर्तुं लग्नाः । तावता स पुण्यसारः स्वचित्ते दध्यौ—' स दृक्षो यास्यति, विलम्बो न विधीयते ' । इति विचिन्त्य स दिशालोकं यावत्करोति, तावता कनिष्ठया गुणसुन्दर्या गदितम्—हे स्वामिन् कथं देहचिन्तां कर्तुं तव शङ्कास्ति ?' । तयेत्युदिते स प्राह—'एवमेव' । तदनन्तरं स दत्तहस्तस्तया सहाधोभूमौ समागत्य स्वज्ञापनाय द्वारपट्टे खटिकयैवं श्लोकमेकं लिखति स्म । तद्यथा—

" गोपालयपुरादागां वलभ्यां दैवयोगतः ।
परिणीय वधूः सप्त पुनस्तत्र गतोऽस्म्यहम् ॥ १ ॥"

अतिप्रचण्डां दुस्तुण्डां गृहिणीं परिवर्जयेत् ॥ १ ॥"

इत्युक्ते पुण्यसारः प्राह—'यदीमां कन्यां परिणयामि, तदाहं सत्यप्रतिज्ञो भवामि, नान्यथा'। इति निगद्य स बुद्धिमान् पुण्यसारस्तल्लाभायापरोपायं व्यचिन्तयत्। तदैकवारं पितृवचनात्स्वकीयां कुलदेवीं समभावां श्रुत्वा तदनन्तरं शुभवासरे कुसुमनैवेद्यधूपविलेपनादिभिस्तां समभ्यर्च्य विनयतत्पर इति प्रार्थयामास—"हे देवि यया तुष्टया त्वया श्रेष्ठिनः पुरन्दरस्याहं पुत्रो दत्तः, सा त्वं मम कलत्रवाञ्छां पूरय। हे कुलदेवते मम समीहितं चेन्न पूरयसि, तर्ह्यहं कथं निर्मितः?। हे मातस्तदाहमतः स्थानान्नोत्थास्यामि, तदा (च) भोक्ष्यामि, यदा मद्वाञ्छितं पूरयसि"। एवं प्रतिज्ञायां कृतायामेकेनोपवासेन सा तुष्टा प्रोवाच—'वत्स शनैः शनैः सर्वं भव्यं भविष्यति, त्वं चिन्तां मा कुर्याः'। इत्युक्ते हृष्टचित्तः सन् पुण्यसारः पारणकं कृत्वा जनकानुज्ञयावशिष्टकलाभ्यासं विदधे। यावता कलाभ्यासं कृत्वा संप्राप्तयौवनो बभूव, तावता दैवयोगेन द्यूतक्रीडारतो बभूव। वल्लभत्वेन पितृभ्यां निवारितोऽपि स द्यूतव्यसनान्न निवर्तते। एकदा लक्षमूल्यं नृपाभरणं श्रेष्ठिगृहाद् गृहीत्वा लक्षे हारिते सति पुण्यसारेण द्यूतकाराणां प्रदत्तम्। कियता कालेन राज्ञा तच्चाभरणं याचितम्। तदा श्रेष्ठिना समर्पणाय स्थानकं विलोकितम्। यदा तत्र नृपाभरणं न दृष्टं, तदा मनसि चिन्तितम्—'नूनं मत्पुत्रेण पुण्यसारेण गृहीतं भविष्यति। गुप्तस्थानस्थितं वस्तु नापरः कोऽपि गृहीतुं समर्थः'। तत् गतं ज्ञात्वा श्रेष्ठिना ध्यातम्—

"यदर्थं खिद्यते लोकैर्यत्नश्च क्रियते महान्।

माचारं समाकर्ण्य कुलदेव्याः पुरो गत्वा कर्तरिकया (क्षुरिकया इति वा पाठः) स्वकीयं शिरश्छेत्तुं प्रारेभे। तदा देवता प्रकटीभूय समाचख्यौ—'भो ईदृशं साहसं कथं करोषि ?' इत्युक्ते श्रेष्ठिपुत्रः प्राह—' यन्मया चिन्तितां कन्यामन्यः पुमान् परिणीतवान्, तर्हि मम जीवितेन किम् ? '। इति निगदिते तया कुलदेव्या भणितम्—"हे वत्स या कन्या मया तव दत्ता, सा तवैव भविष्यति। वृथा मरणसाहसं मा कृथाः"। पुनः पुण्यसारोऽवदत्—' परस्त्रीसङ्गमो मम कर्तुं न युज्यते, इयं तु परिणीतैव। अथ मया किं कर्तव्यम्?'। देवता पुनरप्याख्यत्—" हे वत्स सांप्रतं बहुना प्रजल्पितेन किम् ?। परंतु निश्चयेनैषा न्यायवृत्त्यैव तव प्रिया भविष्यति"। इति निगद्य देवता स्वस्थानं गता। पुण्यसारः सकौतुकोऽपि देवतावाक्यमसंशयमेव स्वचित्ते मेने। ततः पुनः सा गुणसुन्दरी पतिवियोग-दुःखिता सती क्वापि निजकान्तमलभमाना मानसिकस्वरूपं कस्याप्यग्रेऽकथयन्ती षण्मासीमतिक्रम्य परिपूर्णेऽवधौ स्वां प्रतिज्ञां पूर-यितुं तस्मात्पुराद्बहिः शुभकाष्ठैश्चितां कारयित्वा जनैर्वार्यमाणापि ज्वलितानले प्रवेष्टुं चचाल। तदा सकलेऽपि पुर ईदृशी वार्ता बभूव—"हि (निश्चितं) यदयं बालोऽपि साधेशः केनापि वैराग्येण वह्निप्रवेशं कर्तुकामोऽस्ति"। इतश्च नृपेण तं समाचारं ज्ञात्वा पुरन्दरश्रेष्ठिना, तथा रत्नसारेण,पुण्यसारेण,तथा पौरजनेन सह तत्रागत्येति कथितम्—"भोः केनापि तवाज्ञा खण्डिता? वा केनापि त्वदीयं किञ्चिद्विना-शितम् ? यद्दुःखकारणं भवति, तत्कथय। कथं काष्ठभक्षणं करोषि ?"। ततोऽनन्तरं श्रेष्ठिना रत्नसारेण भणितम्—"भो यदि ममापराधो भवति, अथवा मम पुत्र्याः कोऽप्यपराधो भवति, तर्हि कथय"। इत्युक्ते साऽब्रवीत्—"कस्याप्यपराधो नास्ति। के-नापि मदाज्ञा न खण्डितास्ति। मदीयं केनापि किंचिद्गृहीतं नास्ति। परंत्विष्टवियोगं वितन्वता दुष्टदैवेनाहं दण्डितोऽस्मि। तेन कारणेन दुःखदग्धस्य मम वह्निरेव शरणम्"। सेति जल्पन्ती निःश्वासान्मुञ्चन्ती यावता चितासमीपं ययौ तावता पुरस्वामिना

इति श्लोकं लिखित्वा यावता सर्वाः पूर्वकथितश्लोकार्थमजानन्त्यो लज्जमानाः सन्ति, तावता गृहद्वारे गत्वा गुणसुन्दर्याः क-
णितम्—'त्वं मध्ये व्रज, यथा मम सुखेन देहचिन्ता स्यात्'। इत्युक्ते सापि भर्तृनिराबाधहेतवे गृहमध्ये गता। तदा स तत्रैव वटे
गत्वा यावता तत्कोटरे प्रविष्टस्तावता ते देवते अपि समागते। ताभ्यां स्वशक्त्या तं वटं समुत्पाट्य स्थाने मुक्तः॥

इतः पुरन्दरश्रेष्ठी अपि तत्पुरे भ्रान्त्वा तं पुत्रं विलोकयन् रात्रिपर्यन्तेऽतिश्रान्तः सन् यावत्तत्र समाययौ, तावत् सा र-
जनी प्रगता, तमिस्रं क्वापि प्रणष्टम्। एतावता पुण्यसारोऽपि प्रभातसमयं विज्ञाय वटकोटरान्निःसृत्य चारुवेषं शृङ्गारादिकं परिधाय
यावता तत्र संस्थितोऽस्ति, तावता श्रेष्ठ्यद्भुतश्रीशोभायमानं पुत्रं दृष्ट्वा सविस्मयः सन् वत्स वत्सेति जल्पन् तं समालिंगति स्म।
ततः श्रेष्ठिना पुत्रः स्वगेहमानीतः। तौ द्वावपि समागतौ दृष्ट्वा श्रेष्ठिनी प्रहर्षिता। ततः पितामातृभ्यां स्नेहपूर्वकं तं पुत्रं स्वोत्सङ्गे
निवेश्य समालिंग्य पृष्टम्—'हे वत्स तवेदृशी शोभा क्व संजाता ?'। तदानीं स पुण्यसारः पित्रोरग्रे विस्मयकारिणीं स्वकीयां कथां
समग्रां कथयामास। तदानीं मातापितरौ साश्चर्यं तत्कथां श्रुत्वेत्यूचतुः—"अहो सुतस्य कीदृशं भाग्यमस्ति ? येन रात्रिमध्ये ईदृशी
महोत्कृष्टा ऋद्धिर्लब्धा"। पुनर्जनको बभाण—"भो वत्स मन्मया रोषवशात्तव किमप्यपराधवाक्यं शिक्षादापनार्थं कथितं, तत्त्वया
क्षन्तव्यम्"। इत्युक्ते पुण्यसारोऽप्याह—"तात भवदीया शिक्षा मम सुखंकरी जाता। यदुक्तम्—

अमीयरसायण अग्गली माय ताय गुरु सीस।
जे ज न मन्नइ बप्पडा ते रुलीया निसदीस"॥ १॥

अदृष्टाश्रुतपूर्वे या वस्तुन्युत्पद्यते क्षणात् । बुद्धिरौत्पातिकी नाम सा बुधैः परिकीर्तिता ॥ ९ ॥

औत्पातिकीबुद्धिविषये श्रीक्षेमंकरजिनेन रोहककथानकं प्रोच्यते स्म । तद्यथा—

उज्जयिन्यां महापुर्यामरिकेशरिनामा नृपतिर्बभूव । तस्याः पुर्याः पार्श्वे महती शिलास्ति । तत्समीपे नटग्रामश्चैकोऽ-
भवत् । तत्र रंगशूरनामा नटो वर्तते । तत्पुत्रः सारतरः प्रचुरकलापात्रं बुद्ध्या सुरगुरुसमानो बालरूपो रोहकनामाभूत् । इतश्च बाल्ये-
ऽपि तस्य जननी विपन्ना । ततश्च पित्रा रंगशूरेण द्वितीया रुक्मिणी नाम स्त्री परिणीता । यौवनमदोन्मत्ता भर्तृसन्मानगर्विता सती
रोहकस्य तथाविधां देहशुश्रूषां न करोति । तदा रोहकः कुपितः सन् प्रोवाच—'हे मातर्यत्त्वं मम शरीरशुश्रूषां न विदधासि, त-
तस्तव निश्चयेन भव्यं न भविष्यति'। इत्युक्ते सावदत्—'भोः शिशो त्वया रुष्टेन किम्? तुष्टेन (च) किम्? त्वत्तः किं मम
विरूपं भविष्यति'। तदीयमीदृशं साभिमानं वचः श्रुत्वा रोहकश्चिन्तयामास—'कमप्यपराधं समुत्पाद्य तथा करिष्ये, यथा तात-
सैयपाऽनिष्ठा भविष्यति'। इति विचिन्त्य स एकदा यामिन्यां समुत्थाय सहसेति प्रोक्तवान्—'हे तात कोऽपि पुमान् गृहमध्यतो
निःसृत्य याति'। तद्वचः श्रुत्वा गृहांगणे प्रसुप्तस्तत्पिता समुत्थाय पुत्रं प्राह—'हे वत्स तं दुष्टनरं मम दर्शय'। इत्युक्ते रोहकेण
गदितम्—'तात स तत्क्षणादुत्प्लुत्य गतः'। इति कथिते रंगशूरः प्रियायां विरक्तचित्तोऽभूत—"किमियं मद्गेहिनी परपुरुषास-
क्ता बभूव? अथवा किमेतत्कथ्यं? स्त्रिय एवंविधा एव भवन्ति। यतः—

[1]रूवोवहसिअमयरधयं पि पुहवीसरं पि परिहरिउं । इयरनरे वि पसिज्जइ ही ही महिलाण अहमत्तं ॥१॥

१ रूपोपहसितमकरध्वजमपि पृथ्वीश्वरमपि परिहृत्य । इतरनरेऽपि प्रसज्जति हा हा महिलानामधमत्वम् ॥

प्रोक्तम् 'यः कश्चिदस्य परमाभीष्टो भवति तेनायं संबोध्यास्मान्मृत्युसाहसाद्रक्षणीयः'। तदा पौरैरित्युक्तम्—'एतस्य पुण्यसारेण सह मैत्री वर्तते'। इति वचो निशम्य राज्ञा पुण्यसारस्य समादिष्टम्। तदा स पुण्यसारो नृपादिष्टः सन् तन्निकटे गत्वा तं प्रतीति बभाषे—"भो मित्र तव तारुण्यवयःस्थितस्य धनाढ्यस्य दुःखकारणं ममाकथयित्वा मरणं न युक्तम्"। तदा सावदत्—'यस्याग्रे दुःखानि कथ्यन्ते, स कोऽपि न दृश्यते'। तदा पुण्यसारेणोक्तम्—'भो मित्र तव सा चेष्टा दृश्यते यया समस्तनृणामुपहास्यं करिष्यसि'। इत्युक्ते तया तं पुण्यसारं समुपलक्ष्य स्मितं विधाय तल्लिखितं श्लोकं निगद्येति प्रोचे—'अयं श्लोकः किं भवता लिखितो न वा?'। तदा तेन आमेति भणिते सा जजल्प—"अहं सा तव प्रिया, या त्वया तोरणद्वारे मुक्ताभूत्। गुणसुन्दरीति मन्नाम। हे कान्त समग्रोऽप्ययं प्रयासस्तव हेतवे मया चक्रे। तस्मात्प्रसादं विधाय मम स्त्रीवेषं त्वं शीघ्रमेव समर्पय"। इत्युक्ते साश्चर्येण पुण्यसारेण स्वगृहान्मनोहरं नारीवेषं समानाय्य तस्यै प्रददे। तदा सा तं वेषं परिधाय स्त्रीरूपेण प्रकटीबभूव। तदा पुण्यसारेण नरेन्द्रादिपूज्यवर्गस्येत्थं निगदितम्—'वधूर्भवतां वन्दते'। कान्त इति कथयति सा गुणसुन्दरी नृपं तथा श्वश्रूश्वशुरौ नमश्चक्रे। तदा नृपादिकैः पृष्टम्—'भोः पुण्यसार किमेतत्संजातम्?'। तदा तेन नृपाग्रे पौरजनसमक्षं विस्मयकारिणी स्वकीयकथा साद्यन्ता निगदिता। तदा सर्वः कोऽपि जनश्चमत्कृतः पुण्यसारस्य पुण्यं प्रशशंस। इतश्च रत्नसारश्रेष्ठिना नृपो विज्ञप्तः—"स्वामिन् येन मत्पुत्री परिणीताभूत्स दैवयोगेन नारी बभूव। अथ मत्सुतायाः का गतिः?"। इति पृष्टे नृपोऽवादीत्—'भो अत्र का पृच्छा? सापि पुण्यसारस्य गेहिनी भवतु'। एवं नृपादेशं प्राप्य सा रत्नसुन्दरी पुण्यसारस्यैव वल्लभाभवत्। तथा वल्लभीपुरात्ताश्च वल्लभाः पुण्ययोगात्पुण्यसारस्य मन्दिरे समाययुः। एवं तस्य पुण्यसारस्याष्टौ प्रियाः संजज्ञिरे। सर्वोऽपि जनः पुण्यप्रशंसां चकार ॥

प्रेषणीयः'। इत्याकार्य रोहकेण विज्ञापितम्—'हे देव नगरवासी कोऽपि कूपः प्रेष्यः, यथा तत्सार्थे ग्रामकूपः संप्रेष्यते'। इत्युक्ते राज्ञा चिन्तितम्—'एषा बुद्धिर्न सामान्या'। ततः पुनरप्येकदा राज्ञा कथापितम्—'भो ग्रामत उत्तरस्यां दिशि वनमस्ति, तद्दक्षिणस्यां कृतं विलोक्यते'। तदा रोहकेण कथापितम्—'ग्रामसंनिवेश उद्यानादुत्तरतः क्रियते, तदा वनं ग्रामाद्दक्षिणस्यां भवति'। इत्युक्ते राज्ञा चिन्तितम्—'अस्य गरीयसी बुद्धिः'। पुनरेकदा नृपेणादिष्टम्—'पावकं विना परमान्नं पाचयित्वा मम प्रेष्यम्'। इति समादिष्टे रोहकोऽवकरमध्ये यत्नतः स्थालीं निवेश्य पायसं पपाच। नृपादेशः प्रमाणीकृतः। ततः परं ग्रामलोकस्य कथापितम्—"य एवंविधो बुद्धिमान् भवद्ग्रामेऽस्ति, स एवंरूपयाऽन्योऽन्यविरुद्धया व्यवस्थया मम पार्श्वे प्रेष्यः। परं तेन स्नानं कृत्वा नागन्तव्यम्, मलिनाङ्गेनापि नागन्तव्यम्। वाहनारूढेन नागन्तव्यम्, पादचारिणापि नागन्तव्यम्। उत्पथेन न समेयम्, मार्गेणापि न समेयम्। रात्रौ तथा वासरेऽपि नागन्तव्यम्। कृष्णपक्षे तथा श्वेतपक्षे नागन्तव्यम्। छायायां तथा चातापेऽपि नागन्तव्यम्। उपायनं गृहीत्वा तथा रिक्तपाणिनापि नागन्तव्यम्"। इत्यादेशे समागते सति रोहको पानीयेन शरीरं प्रक्षाल्य, एरुकमारुह्य पादाभ्यां भूमिं स्पृशन्, चक्रेरखान्तरालस्थः, सन्ध्यासमये, कुहुदिने, (प्रतिपद्युक्तामावास्या कुहुशब्देनोच्यते) चालणिकां शिरसि धृत्वा, मृत्पिण्डं ढौकनकस्थाने गृहीत्वा, नृपसभायां गत्वा प्रणामं कृत्वा भूपस्य समीपे निषसाद। मृत्तिकापिण्डं नृपाग्रे मुमोच। तदा राज्ञा प्रोक्तम्—'भोः किमेतत्?'। इत्युक्ते स प्राह—'स्वामिन् जगन्मातेयं मृत्तिका'। पुनरपि राज्ञा पृष्टम्—'भोस्त्वं कया युक्त्या समागतः?'। तदा तेनोक्तम्—'यथा नृपेणादिष्टम्'। ततः सर्वमपि विवरं कृत्वा भूपाग्रे स प्राह। तदनन्तरं नृपेण समस्तमपि स्वकीयमादिष्टं प्रमाणीकृतं ज्ञात्वा द्रव्यसन्मानदानेन तं सत्कृत्य सभामध्ये प्रशंसितः—"अहो अस्य महात्मनो मतिवै-

इति विमृश्य स तां न संभाषयति। तदा सदुःखा सती सा रुक्मिणी व्यचिन्तयत्—" मम भर्ता कथं कुप्रसन्नः संजातः? मयैतस्याज्ञा न लङ्घितास्ति। परपुरुषेण सह किमपि हास्यादिकं न कृतम्। विनापराधं मयि विरक्तता कथम्?"। इत्थं कुर्वता दिनत्रिकं व्यतीतम्। तदा तया चिन्तितम्—" नूनमेतेन बालेन मत्पतिः कुपितो भविष्यति, तदहमस्यैव भक्तिं करोमि, यथा भर्ता मम सुप्रसन्नतां भजते"। इति विचिन्त्य सा भक्तिपूर्वकं रोहकं प्राह—" वत्स त्वत्पितरं मयि विषये सानुकूलं कुरु। अथाहं तव दासी वर्ते। यत्कथयिष्यसि तत्करिष्ये"। इत्युक्ते स सुधी रोहकः सुप्रसन्नो जातः। तदा पुनरपि सचन्द्रायां रात्रौ जनकं प्रतीति प्रोचे—' हे तातोत्तिष्ठोत्तिष्ठ, अद्याप्यसौ नरो याति'। तदा पित्रा निगदितम्—' वत्स! क्व? मम दर्शय'। तदा तेन स्वशरीरच्छाया दर्शिता। तदा जनको बभाषे—' इयं तु च्छाया, न पुमान्'। तदा रोहकेण प्रोक्तम्—' तात मयाग्रेऽप्येवंविधो नरो दृष्टः'। इति श्रुत्वा रंगशूरो दध्यौ—' हा, मया बालकवचनात्पत्नी दोषशंकया वृथापमानिता"। ततः स उपशान्तरोषः सन् रुक्मिणीं प्रति पुनरपि वल्लभत्वं भेजे। तथा सा रोहकस्य निरन्तरमेव भक्तिं कुरुते। इतश्च रोहको निरन्तरं पित्रा सह भुंक्ते। भक्तितत्परामपि तां जननीं प्रति न विश्वसिति॥

अन्यदा स तातेन सह गत्वा सर्वामप्युज्जयिनीं विलोकयामास। ततस्ताते पुरमध्ये गते सति स रोहकः सिप्रानदीतटे समेत्य समग्रामपि पुरीं देवकुलादियुक्तां रेणुमयीं कृत्वा तद्रक्षणाय स्वयं प्रतीहारवत् स रोहकस्तस्थौ। तावता स्वल्पपरिवारसमन्वितमश्वमारूढं समागच्छन्तं नृपं प्रति सावष्टम्भमिदं वचः स प्रोचे—" भो राजपुत्र कथं त्वं प्रासादश्रेणिविराजमानां पुरीं भंक्ष्यसि? यतस्तुरंगो नान्यत प्रवर्तयसि?"। इत्युक्ते नृपस्तदीयबुद्ध्या वाण्या च चमत्कृतः सन् बभाषे—'अयं कस्य पुत्रः?'। तदा समीप-

तः। ततः परं तौ द्वौ गजरूपं कृत्वा तस्य मुनेर्दन्तघाताद्युपद्रवं विदधतुः । तदनन्तरं फटाटोपभयंकरं सर्पसर्पिण्यो रूपं विरचय्य, तथा पिशाचपिशाच्यो रौद्ररूपं निर्माय तौ दुष्टसुरौ तस्य मुनीश्वरस्योपद्रवं कर्तुं लग्नौ। परं स मुनिर्न क्षोभं प्राप्तः । एतावता देवेन्द्रस्याग्रमहिष्यौ रंभातिलोत्तमानाम्न्यौ वज्रायुधमुनिं नमस्कर्तुं यावता समागच्छतुः, तावता तौ दुष्टसुरौ ते देवेन्द्रप्रिये समागच्छन्त्यौ वीक्ष्य त्वरितं नष्टौ। तदानीं ताभ्यां शक्रपत्नीभ्यां जयकारकैर्वचनैस्तौ गाढं हक्कितौ। ततः परं तस्य मुनेर्भक्तिभावेन तदग्रे रंभादेवाङ्गना स्वयं विलासमनोहरं नृत्यं चक्रे । तथा तिलोत्तमा सपरिवारापि सप्तस्वरग्रामत्रयपवित्रं प्रवरं गीतगानं व्यधात् । ततः परं ते देव्यौ परिवारसमन्विते अपि तं मुनीन्द्रं प्रणम्य स्वस्थानं जग्मतुः। तथा स वज्रायुधमहामुनिरतिदुष्करां वार्षिकीं प्रतिमां पारयित्वा पुनर्भूमण्डले विहरन् क्षेमंकरजिने शिवं गते एकदा सहस्रायुधनृपतेर्नगरे समाययौ। तेनापि सहस्रायुधभूभुजा वज्रायुधमुनिसमागमं श्रुत्वा महता महोत्सवेन तत्र गत्वा तं मुनिप्रवरं नत्वा तदन्तिके सद्धर्मदेशनां निशम्य प्रतिबोधं प्राप्य शतबलं पुत्रं राज्ये संस्थाप्य तस्यैव मुनेः समीपे व्रतमाददे। क्रमेण गीतार्थो जातः। ततः पितुः संघाटके संभूय तौ द्वावपि पितापुत्रौ विविधं तपः कुर्वन्तौ भूपीठे विहारं चक्रतुः। तदनन्तरं तौ द्वावपि ईषत्प्राग्भारसंज्ञके महीधरे समारुह्य पादपोपगमेन स्थितौ। ततः परं तौ वज्रायुधसहस्रायुधमुनी शुक्लध्यानेन पापक्षयं विधाय नवमग्रैवेयकं प्राप्तौ ॥

॥ इति श्रीगद्यबन्धे श्रीशान्तिनाथचरितेऽष्टमनवमभववर्णनो नाम चतुर्थः प्रस्तावः ॥



एवं विलोक्येति स्वचित्ते विचार्यते—यत्सुभाषितमिदं सत्यं जातम्—

**वाजिवारणलोहानां काष्ठपाषाणवाससाम् । नारीपुरुषतोयानां दृश्यते महदन्तरम् ॥१॥**

इति विचिन्त्य राजा तं रोहकं तस्यामेव रात्रौ यामिकत्वे संस्थाप्य स्वयं प्रसुप्तः । एतावता यामिन्याः प्रथमयामे गते राजा विनिद्रो जातः । तदा रोहकं निद्राकुलं दृष्ट्वा नृपेणोक्तम्—'भो रोहक त्वं सुप्तो वा जागर्षि ?'। इत्युक्ते रोहकेणोक्तम्—'स्वामिन् जाग्रदस्मि, परं चिन्तामपन्नो वर्ते'। 'कथय का चिन्तास्ति ?'। तदा तेनोक्तम्—'अजालिंडिका एवंविधा वृत्ताकारा नूनं कः करोति ?'। इत्युक्ते पुनरपि राज्ञा भणितम्—'तर्हि किं विचारितम् ?'। तदा तेन जगदे—'वायुप्रबलत्वात्ता लिंडिकास्तथाविधा जायन्ते'। द्वितीये प्रहरेऽपि नृपो जागरूकः सन् रोहकं प्राह—'भोः कथं निद्रा समागता ?'। तदा स सावधानतया जजल्प—'स्वामिन्मम निद्रा न विद्यते'। ततो भूपेन गदितम्—'मया संभाषितस्त्वं विलंबेन जल्पितस्तत्कथम्?'। तदा तेनोक्तम्—'देव मम चिन्ताभूत्'। 'का चिन्ता'? इति नृपेणादिष्टे साऽवदत्—'पिप्पलपत्राणामादिः प्रान्तो वा गुरुर्भवति ?'। पुनरपि नृपेण पृष्टे तेनैव निर्णयः कृतः—'एतौ द्वावपि तस्य समौ भवतः'। इति श्रुत्वा पुनरपि भूपतिः सुप्तः। तृतीयप्रहरे जजागार। तदा रोहकः प्रजल्पितः—'भो जागर्षि ?'। तेनोक्तम्—'जाग्रदस्मि, परं चिन्ता विद्यते'। राज्ञा पृष्टम्—'का चिन्ता ?'। तेनोक्तम्—"इति विचारयन्नस्मि खिल्लोहडिकायाः शरीरं प्रलम्बं वा पुच्छम् ? तथा तद्देहे श्वेतता वा श्यामताऽधिका भवेत् ?"। ततः पुनर्नृपेणोक्तम्—'तर्हि कथं विचारितम् ?'। इति निगदिते स प्राह—"राजन् देहपुच्छे तस्यास्तु-

राज्ञी । तत्कुक्षिसंभवौ जयविजयनामानौ द्वौ नन्दनौ जातौ । इतः सुवर्णनगरस्वामिनः शंखभूपतेः पृथ्वीदेवीकुक्षिसंभवा पृथ्वीसेनानाम्नी सुकन्यकाऽभयघोषभूपस्य स्वयंवरा समागता । तदा तेनाभयघोषेण हर्षप्रकर्षेण सा परिणीता । एकदा वसन्तसमये समागते स राजा मनोज्ञे पुष्पवनोद्याने राज्ञीशतपरिवृतः क्रीडां कर्तुं ययौ । तदा तस्य राज्ञः पत्न्या पृथ्वीसेनया तत्र परिभ्रमन्त्या दान्तमदनाभिधानो मुनिरेको दृष्टः । तदा तया तत्पार्श्वे धर्मं श्रुत्वा प्रतिबोधं प्राप्य महीपतिमनुज्ञाप्य प्रव्रज्या प्रतिपन्ना । ततः परं राजापि तामुद्यानलक्ष्मीं विलोक्य स्वपुरं समाययौ । इतश्चान्येद्युस्तद्गृहे छद्मस्थतया विहरन्ननन्ततीर्थकृत्समागतः । तदा तेन राज्ञा प्रासुकैरन्नपानैः स तीर्थकृत्प्रतिलाभितः । तदा देवैस्तन्मन्दिरे पञ्च दिव्यानि चक्रिरे । ततश्चोत्पन्नकेवलस्य तस्य तीर्थकृतः समीपे पुत्रद्वययुतोऽभयघोषनृपः प्रव्रज्यां प्रतिपन्नवान् । तदनन्तरं सोऽभयघोषराजर्षिर्विंशतिस्थानकैस्तीर्थकृत्कर्म निबध्य पुत्रद्वयसहितोऽपि कालं कृत्वाऽच्युतकल्पे सुरोऽभवत् । ततश्च्युत्वाभयघोषनृपजीवो हेमांगदनृपात्मजो राजा घनरथो जज्ञे । जयविजयजीवावच्युतकल्पतश्च्युत्वा भवन्तौ जातौ " । हे तात तेन मुनिना तयोश्चन्द्रतिलकसूरतिलकयोरग्र इति निगदितं, तदा तौ द्वावपि विद्याधरकुमारौ त्वद्दर्शनसमुत्कण्ठितौ सन्ताविहायातौ । ततः परं तौ खेचरकुमारौ कौतुकात्कुर्कुटयुग्मं क्षणमेकं ददृशतुः । इतश्च ताभ्यां स्वविद्ययैतौ ताम्रचूडपक्षिणावधिष्ठाय विद्यायाः प्रभावेण स्वं गोपयित्वेहैवास्थायि " ॥

ततस्तौ द्वावपि खेचरौ मेघरथस्येदं वाक्यं श्रुत्वा प्रकटीभूय घनरथनृपस्य चरणौ प्रणेमतुः । ततोऽनन्तरं तौ खेचरकुमारौ तस्य पूर्वभवतातस्य चरणौ प्रणिपत्य क्षणं स्थित्वा पुनः स्वस्थानं गत्वा संयममादाय दुस्तपं तपस्तप्त्वा केवलज्ञानं संप्राप्य परमं पदं प्रापतुः ॥

## ॥ अथ पञ्चमः सर्गः ॥

इतश्चास्यैव जंबूद्वीपस्य पूर्वविदेहमध्यगे पुष्कलावतीविजये पुण्डरीकिणी नाम पुरी विद्यते । तत्र नीतिकीर्तिजयश्रीणां मन्दिरं घनरथाभिधस्तीर्थंकरो राजा बभूव । तस्य द्वे प्रिये अभूताम् । आद्या प्रीतिमती, द्वितीया मनोहरी चाभवत् । इतो वज्रायुधजीवो नवमग्रैवेयक एकत्रिंशत्सागराण्यायुः प्रतिपाल्य ततश्च्युत्वाग्रप्रियाप्रीतिमतीकुक्षौ मेघस्वप्नसूचितः सुतत्वेन समुत्पन्नः । तथा सहस्रायुधजीवस्ततो मृत्वा तस्यैव नृपस्य द्वितीयप्रियायाः कुक्षौ रथस्वप्नसूचितः पुत्रत्वेनावतीर्णः । ततः परं परिपूर्णसमये ताभ्यां तौ द्वावपि शुभलक्षणसमन्वितौ मेघरथदृढरथनामानौ नन्दनौ जातौ । क्रमेण तौ शैशवमतिक्रम्य कलाचार्यस्य समीपे सविनयं महाप्राज्ञतया द्वासप्ततिकलाभ्यासं चक्रतुः । ततः परं तौ द्वावपि कुमारौ कलाकलापसंपूर्णौ रूपविनिर्जितमदनौ यावता क्रमेण यौवनं प्राप्तौ, तावता सुमन्दिरपुराधीशस्य निहतारिनृपस्य सुते प्रियमित्रामनोरमाभिधे उभे अपि मेघरथः परिणीतवान् । तस्यैव निहतारिनृपतेः कनिष्ठा पुत्री सुमतिनाम्नी दृढरथस्य प्रिया बभूव । ततः परं मेघरथपत्नीभ्यां प्रियमित्रामनोरमाभ्यां नन्दिषेणमेघसेनाभिधानौ प्रवरनन्दनौ प्रसूतौ । दृढरथस्यैक एव पुत्रो रथसेनाभिधः संजातः । क्रमेण ते त्रयोऽपि शैशवमतिक्रम्य समस्तं कलाभ्यासं चक्रुः । इतश्चैकदा राजा घनरथः पुत्रपौत्रसमन्वितः सिंहासनमलंकृत्य सभामण्डपे स्थितोऽस्ति, तावता मेघरथेन समधीतकलानां स्वपुत्राणामिति प्रोक्तम्—'हे वत्साः स्वस्वप्रज्ञाप्रकाशनार्थं प्रश्नोत्तराणि वदन्तु'। ततस्तद्वचनमाकर्ण्य कनिष्ठेन पठितम्—

"कथं सम्बोध्यते ब्रह्मा दानार्थे धातुरत्र कः। कः पर्यायश्च योग्यानां को वालंकरणं नृणाम् ॥१॥"

श्रूयते जीवहिंसावान्निषादो नरकं गतः । दयादिगुणसंयुक्ता वानरी त्रिदिवं गता ॥ १ ॥ ”

इत्युक्ते श्येनपक्षिणा मेघरथनृपपार्श्वे पृष्टम्—‘ भो राजन्ममाग्रे वानरीनिषादवृत्तान्तं कथय ’ । ततः स प्रोचे—

इह जगति वानरशताकीर्णा हरिकान्ता नाम पुरी वर्तते । तत्र वानरप्रतिपालनतत्परो हरिपालनामा भूपाल आसीत् । तस्यामेव नगर्यां क्रूरो यमकिङ्करप्रायो निर्दयः कृतघ्नशिरोमणिर्निषादश्चैकोऽभूत् । स पापात्मा वनान्तरे गत्वा नित्यं वराहशूकरहरिणादिकाननेकशो जीवाञ्जघान । तथा तत्पुरासन्ने वने भूपप्रसादबलेन बहवो वानरा वसन्ति । तन्मध्ये नित्यं मांसविरता दयादाक्षिण्यशालिनी हरिप्रियाभिधाना कापि वानरी समभूत् । एकदा स निषादः शस्त्रपाणिर्मृगयातत्परः सन्नग्रे घोरं व्याघ्रमेकं ददर्श । ततो भयभीतः संस्तं दृष्ट्वा क्वापि समीपस्थे वृक्षे चटितः । तदा तत्र पादपोपरि प्रसारितमुखां क्रूररूपां वानरीमेकां दृष्ट्वा पुनर्भयभ्रान्तो जातः । तदा वानर्या तं व्याघ्रत्रस्तं समागतं ज्ञात्वा स्वकीयं प्रसन्नरूपं कृत्वोपविष्टा । तदा निषादोऽपि विश्वासं प्राप्य तदन्तिके निषण्णः । ततः सा वानरी तं भ्रातृसमं गणयित्वा तस्य शिरसि केशान् विचिनोति स्म । तदुत्सङ्गे शिरः कृत्वा स निषादः प्रसुप्तः । तदा व्याघ्रस्तरुतले समागत्य वानर्युत्सङ्गे शिरः कृत्वा तं मानवं प्रसुप्तं विलोक्य वानरीं प्रोवाच—‘ अहो! विश्वमध्य उपकारं कृतं कोऽपि न जानाति । मनुष्यस्तु विशेषेण न जानाति । अस्मिन्नर्थे कथा श्रूयताम्—

एकस्मिन् ग्रामे शिवस्वामी द्विज आसीत् । एकदा स द्विजस्तीर्थयात्रार्थं स्वमन्दिरान्निर्गत्य देशान्तरे भ्रमन्नेकस्यां महाटव्यां निपतितः । तदा तृषार्तः सन् जलं विलोकयन्नेकं जीर्णकूपं ददर्श । तदा तृणमयीं रज्जुं विधाय तया करपत्रकं बद्ध्वा स

इतश्च कुर्कुटौ समस्तामपि पूर्वस्थितिं श्रुत्वा महापापविधातारं चात्मानं मनसा हीलयित्वा घनरथनृपचरणौ नमस्कृत्य स्वज्ञापयेत्यूचतुः—'हे भगो अथावां किं कुर्वहे ?'। तदनन्तरं राज्ञा तयोः श्रीसम्यक्त्वसमन्वितोऽहिंसालक्षणो धर्मः समादिष्टः। ताभ्यां भावसारतया स धर्मः प्रतीच्छितः। तदनन्तरं धर्मं संज्ञाव्य तौ कुर्कुटौ मृत्वा भूताटव्यां ताम्रचूलस्वर्णचूलनामानौ देवयोनिमध्ये भूतदेवौ जातौ। तदनन्तरं तौ विमानमारुह्य तत्रागत्य कृतोपकारं तं घनरथनृपं प्रणम्याज्ञार्द्धिं विधाय तदीयां प्रशंसां कृत्वा तमनुज्ञाप्य स्वमाश्रयं जग्मतुः। राजा सुखेन चिरं राज्यलक्ष्मीं पालयामास ॥

इतश्चैकदा लोकान्तिकदेवैस्तत्र समेत्य घनरथनृपं प्रतीति प्रोक्तम्—'भोः स्वामिन् धर्मतीर्थं प्रवर्तय'। इत्युक्ते स ज्ञानतः स्वं निष्क्रमणकालं ज्ञात्वा सांवत्सरिकदानं दत्वा मेघरथसुतं राज्ये संस्थाप्य दीक्षां गृहीत्वा कर्मक्षयं कृत्वा केवलज्ञानं संप्राप्य भविकान् प्रतिबोधयन् श्रीघनरथनामा जिनः क्षितिमण्डले विजहार ॥

अथैकदा मेघरथभूपतिर्लघुभ्रात्रा युवराजेन दृढरथेन सह प्रियाभिः समन्वितो देवरमणोद्याने ययौ। तत्र गत्वाऽशोकतरोर्मूलेऽसौ नृपतिर्निविष्टः। तदा नृपाग्रे कैश्चिद्भूतैः प्रेक्षणक्रिया समारब्धा। ते नानाशस्त्रधराः कृत्तिवाससो भूतिमण्डितशरीराः सन्तः क्षणमात्रमतिविस्मयकरं नृत्यं विदधुः। तथा तेषु नृत्यं कुर्वत्सु किंकिणीध्वजाविराजमानं विमानं चैकं व्योममार्गादुत्तीर्य नृपसन्निधौ समागतम्। तन्मध्ये सुन्दराकारं नारीपुरुषयुग्मं निरीक्ष्य देवी नृपपार्श्वे इति पप्रच्छ—'एतौ कौ ?'। तदा राजा प्राह—

"हे देवि वैताढ्यगिरावुत्तरश्रेण्यामलका नाम पुरी विद्यते। तत्र विद्युद्रथखेचरेन्द्रपुत्रः सिंहरथनामायं विद्याधरेश्वरः। इयं वेगवतीनाम्न्यस्य भार्या। अनया सहितोऽसौ धातकीखण्डद्वीपे जिनवन्दनाय गतोऽभूत्। ततो वलमानो हे प्रिये यावदिहा-

विधुरतयावदत्—"अहो मयैकस्य दुःखस्य पारोऽद्यापि न संप्राप्तोऽस्ति, तावन्मम द्वितीयमपि दुःखं प्राप्तम्। अथ किं करोमि?"। इति विचिन्त्य राज्ञा तत्क्षणमेव मंत्रनिपुणा अनेके समाहूताः। ते सर्वेऽपि तस्या राजसुताया उपचारं कर्तुं लग्नाः, परंतु गुणो न भवति। तावत्तैको मंत्रवादी नृपाग्रे प्रोवाच—"हे राजन्मम निर्मलं ज्ञानमस्ति, तेनाहं जानामि। मम कथितं शृणु—यदसौ द्विजो हन्यमानोऽस्ति, स निर्दोष एव विद्यते। परं तदीयः संबन्धः श्रूयताम्—पूर्वमनेन दयावता विप्रेण कान्तारवनमध्ये कूपात्सर्पवानरव्याघ्राः समुध्धृताः। तथा चतुर्थः कलादोऽपि समुध्धृतः। तैस्तदास्य विप्रस्य निगदितम्—'त्वयास्माकं महानुपकारः कृतोऽस्ति। अथ त्वमपि कदाचिन्मथुरायां समागच्छेः'। इति निगद्य ते स्वस्थानं गताः। ततोऽसौ परिभ्रमन्नत्रागमत्। तदा वानरेण सत्फलैरसौ सत्कृतः। तथा व्याघ्रेणास्य सत्काराय त्वत्पुत्रं विनाश्य तदीयमाभरणमेतस्मै प्रदत्तम्। इतश्चासौ मुग्धचित्तो विप्रः स्वर्णकारस्य मिलनाय समागतः। व्याघ्रदत्तमाभरणं कलादस्य दर्शितम्। तदा कलादेन तदाभरणं समुपलक्ष्य कृतघ्नतया तव ज्ञापितम्। त्वयाऽन्यायकारकत्वाद्वध्यशालायामसौ नीतः। एतावता दैवयोगेन मार्गे तेनैव सर्पेणासौ दृष्टः। समुपलक्षितश्च। तदा तेन फणिनाप्यस्योपकारं स्मरतैतद्द्विजमोचनाय लतान्तरे समागत्य त्वत्पुत्री दष्टा। हे नाथ यद्यसौ विप्रो मुच्यते, तर्हि निश्चयेनेयं त्वत्पुत्री जीवति"। 'इत्यर्थे कमपि प्रत्ययं दर्शय' इति नृपेणादिष्टे मांत्रिकस्तं महोरगं पुलीशरीरेऽवतारयामास। तेनापि तत्सर्वमनुमतम्, यन्मंत्रवादिना प्रोक्तम्। तदनन्तरं यावता राजा संजातप्रत्ययः सन् तं द्विजं विमोचयामास, तावता भोगिना तं मुक्तं दृष्ट्वा दंशधावनान्निजं विषं प्रतिगृहीतम्। ततश्च राजकन्या निराकुला जाता। तदनन्तरं मंत्रवादिना द्विजं प्रतीत्युक्तम्—'भो विप्र तवानेन फणिना जीवितं दत्तम्'। इत्युक्ते विप्रः प्राह—"अहो देहिनां चेष्टितं

विप्रो जलार्थं क्षेपयामास । तदा तया दवरिकया विलग्य कूपमध्यात्कपिरेको निर्गतः । तदा द्विजो दध्यौ—'ममाक्षेपः सफलो जातः'। पुनर्द्वितीयवेलायां दवरकेन करपत्रकं निबध्य मुक्तम् । तदा व्याघ्रसर्पौ समागतौ । तदा तौ प्राणदायकत्वाद्ब्राह्मणस्य पादौ प्रणेमतुः । ततश्च तेषां मध्ये जातिस्मरणपण्डितो वानरो भूमावक्षराणि लिखित्वा द्विजं प्रतीति ज्ञापयामास—"भो द्विज ! वयं मथुरानगरीसमीपे वसामः । त्वया कदापि तत्र समागन्तव्यम् । किंचिदातिथ्यं करिष्यामः । तथाऽस्मिन् कूपे मनुष्यश्चैकः पतितोऽस्ति । परं तु स त्वयाँ न निष्कास्यः । यतः स तव कृतघ्नत्वं करिष्यति "। इति कथयित्वा ते त्रयोऽपि स्वस्थानं ययुः। ततो द्विजेन चिन्तितम्—"एष मनुष्योऽपि वराकः कूपात्कथं न कृष्यते ? स्वशक्त्या सर्वस्याप्युपकारो विधेयः । मनुष्यजन्मन्येतदेव फलं ज्ञेयम् "। इति विचिन्त्य विप्रेण पुनरपि कूपे रज्जुं निक्षिप्य स मनुजोऽपि निष्कासितः । तदा तत्पार्श्वे द्विजेन पृष्टम्—'त्वं जात्या कः ? कुत्र वास्तव्यः ?' इति पृष्टे स प्राह—"अहं मथुरावासी स्वर्णकारः केनचित्कारणेनात्र समागतः । तृषार्दितः कूपे पतितः । कूपमध्यप्ररूढवृक्षशाखामालम्ब्य यावदहं स्थितोऽभूवम्, तावता वानरादयोऽपि पतिताः । परं ते समानकष्टत्वात्परस्परं त्यक्तवैरा जाताः । भो उपकारिंस्त्वया वयं जीवापिताः । एकवारं भो द्विज त्वं मथुरायां समागच्छेः "। इति निगद्य स्वस्थानं ययौ। द्विजोऽपि भूमण्डले भ्रमंस्तीर्थानि कुर्वन् कदाचिन्मथुरायां गतः । तदा वनान्तरे स वानरस्तं दृष्ट्वा समुपलक्ष्य प्रमुदितः सन् पेशलैः फलैः प्रतिपत्तिं चकार। एतावता व्याघ्रेणापि तं विप्रं निरीक्ष्य समुपलक्ष्येति चिन्तितम्—'एष महान् पुमान्मम जीवितदायकः, तर्ह्यस्य कंचिदुपकारं करोमि'। इति विमृश्य वाटिकामध्ये गत्वाऽविवेकत्वेन राजसुतं हत्वा तस्य बहुमूल्यमाभरणं समादाय तस्मै जीवितदायिने विप्राय प्रददौ । ततश्च प्रणामः कृतः । तदा विप्रोऽपि 'दीर्घायुर्भव' इत्याशिषं दत्वा मथुरानगरीमध्ये गत्वा स्वर्णकारगृहं पृच्छन् ययौ । तावता स्वर्णकारो

इत्युक्ते राजपुरुषैः स निषादो गाढबन्धनैर्बद्ध्वा यष्टिमुष्टिप्रहारैर्मार्यमाणो यावता वध्यस्थाने नीतस्तावता व्याघ्रस्तत्र समागत्येति बभाषे—'अहो अस्य मारणं न युक्तम्'। इति श्रुत्वा ते नृपपुरुषाः सविस्मयाः सन्तस्तद्व्याघ्रभाषितं नृपाग्रे शशंसुः। तदा कौतुकाद्भूपोऽपि तत्रागतः। तदा पुनरपि तेन व्याघ्रेण गदितम्—"भो राजन्नस्य पापात्मनो विनाशं कुर्वतस्तवापि पापविभागो भविष्यति। पापजन्तवः स्वयमेव निजकर्मदोषाद्विपदि निपतन्ति"। इत्युक्ते सविस्मयो राजा प्राह—'भो व्याघ्र तव श्वापदरूपस्य मानवी वाणी कुतः? तथेदृशं विवेकचातुर्यं कुतः?'। इति पृष्टे व्याघ्रो जगाद—"भो अस्मिन्नुद्याने विशिष्टज्ञानसमन्विताः सूरयः सन्ति। ते सर्वं कथयिष्यन्ति। तत्पार्श्वे प्रश्नं विधेयम्"। इति निगद्य स व्याघ्रो गतः। तथा स निषादः स्वदेशान्महीपतिना निष्कासितः॥

तदनन्तरं स राजा गुरुसमागमनं श्रुत्वा वनमध्ये गत्वा घनतपोधनपरिवृतं श्रीसूरिं वीक्ष्य भक्त्या ववन्दे। तदनुक्रमेण सर्वानपि मुनीन्नमस्कृत्य गुरोरन्तिके समुपविश्याञ्जलिं कृत्वेति पप्रच्छ—"प्रभो! निर्मलज्ञानचक्षुषा त्वं सर्वं जानासि तेन कारणेनाहं पृच्छामि, कथ्यताम्, सा वानरी मृत्वा कां गतिं ययौ"?। इति पृष्टे गुरुराचख्यौ—"अहो नृप! सा वानरी शुभध्यानवशान्मृत्वा त्रिदिवं गता। यदुक्तमागमे—

तवसंजमदाणरओ पयइए भद्दो किवालू अ। गुरुवयणरओ निच्चं मरियं देवेसु जायेइ ॥१॥"

इत्याकर्ण्य भूयः भूपोऽवादीत्—"भो भगवन् यो जात्या कर्मणा च नीचप्रबलपापकर्मतत्परः स निषादो मृत्वा क्व

विलोक्यताम् । इह ये क्रूराः प्राणिनस्तैः कृतज्ञत्वं समाश्रितम् । अन्यैः कृतघ्नत्वं कृतम् " । इति स्वरूपं विलोक्य विप्रः प्रोक्तवान्—यतः

*दो पुरिसे धरउ धरा अहवा दोहिं पि धारिया धरणी। उवयारे जस्स मई उवयारं जो न विह्मरइ १

इत्युक्ते राज्ञा पृष्टः सन् स विप्रः स्वकीयां कथां साद्यन्तां नृपाग्रे कथयामास । तदा नृपेण संतुष्टेन स शिवस्वामी विप्रः सुतरां सत्कृत्य देशस्वामी कृतः । ततश्च स विप्रः स्वदेशे गत्वा नागपूजाकृते नागपञ्चमीं प्रवर्तयामास ॥

इति कथानकं व्याघ्रेण वानर्या अग्रे कथितम् । " यथा तेन विप्रेण स्वर्णकारविश्वासाद्विपदः संप्राप्ताः, ( तथा ) हे वानरि ! त्वमप्यस्य निषादस्य विश्वासं मा कुर्याः । असावपि तव तथैव महानर्थं करिष्यति । तत एतं मम भक्षहेतवे मुञ्च " । इत्युक्ते सुन्दरस्वभावा वानरी तं न मुमोच । तदा व्याघ्रस्तस्यैव तरोरध उपविश्येति व्यचिन्तयत्—' अहो वानर्याः कीदृशं निश्चलत्वमस्ति ? ' । ततः क्षणेन स जागरूको जातः । तदा वानरी तदुत्संगे मस्तकं दत्वा सुप्ता निराकुला जाता । तदानीं व्याघ्रेण तां प्रसुप्तां निरीक्ष्य समीपे समागत्य निषादं प्रतीत्युक्तम्—" भोस्त्वमेतस्या वानर्या विश्वासं मा कुरु । यदि त्वं हितमिच्छसि तर्हि सप्तदिनक्षुधितस्य ममेमां समर्पय । त्वं सुखेन जीव । अन्यथा कुशलेन गृहं न यास्यसि । अपरं च त्वयेत्यपि कथं न श्रुतमस्ति यत्पुरा वानरेण हतो नृपः ? " । इत्युक्ते निषादेन कथितम्—' भो व्याघ्र तर्हि तां कथां कथय, यथाहं शृणोमि ' । इत्युक्ते व्याघ्रोऽब्रवी-

* द्वौ पुरुषौ धरतो धरा, अथवा द्वाभ्यामपि धारिता धरणी । उपकारे यस्य मति उपकार यो न विस्मरति ॥१॥

ति ”। इत्युक्ते स भुजङ्गः सुप्रसन्नः सन् स्वार्थकृते चित्रलेखां सारिकां समादिदेश। तदा चित्रलेखा गङ्गदत्तं चञ्चुपुटे समुत्पाट्य क्वापि महाह्रदे मुमोच। तदा स भेको नीरमध्ये प्रविश्य सुखेन स्थितः। क्षणान्तरेण तदीयं चित्ताभिप्रायमजानती सारिका प्राह—“ भो गङ्गदत्त शीघ्रं समागच्छ। स्वामी प्रियदर्शनः कष्टेन वर्तते। स्वसमीहितं कृत्वैहि ”। इत्युक्ते गङ्गदत्तेन निगदितम्—‘ हे सारिके शृणु—

> बुभुक्षितः किं न करोति पापं, क्षीणा नरा निष्करुणा भवन्ति।
>
> आख्याहि भद्रे प्रियदर्शनस्य, न गङ्गदत्तः पुनरेति कूपम् ॥ १ ॥ ”

इत्यात्मचिन्तितं तस्याः समाख्याय स पुनरपि तां प्रतीति समाचख्यौ—‘ हे भद्रे ! त्वयापि तस्य विश्वासो न कदापि विधेयः ’। इत्युक्ते सा स्वस्थानं ययौ ॥ हे राजंस्तथान्यायेन क्षुधार्तस्य कृत्याकृत्यविद्धुरत्वं न भवति। तस्मात्त्वं मां प्रीणयाहारादिना, यथा मम प्राणा न यान्ति ”। एवं श्येनवाक्यं श्रुत्वा भूपः प्राह—‘ भो भद्र! यदि त्वं क्षुधितोऽसि, तर्हि तव प्रवराहारं यच्छामि’। तदा श्येनपक्षिणा पुनरप्युक्तम्—‘ भो नृपामिषं विनाऽन्य आहारोऽस्माकं न रोचते’। तदा नृपेण भाषितम्—‘ सूनायाः समानीय तदपि दास्यामि ’। इत्युक्ते स पक्षी प्रोवाच—“ यदि मम पश्यतोऽपि प्राणिनां शरीरं छित्वा पललं दीयते, तदा मम तृप्तिर्भवति, नान्यथा ”। तदा राज्ञोक्तम्—“ भोः पक्षिन्नयं पारापतः पक्षी तुलाधृतो यावन्मानो भवति, तावन्मात्रं मम शरीरस्य पललं छित्वा तव दास्यामि”। इत्युक्ते तेन पक्षिणा तत्प्रतिपन्नम्। तदा नृपस्तुलां समानाय्य तदीय एकपार्श्वे पारापतद्विजं न्य-

यास्यति ?" । इत्युक्ते सूरिणोक्तम्—"अस्य पापिनो नरकं विना नान्यत्र स्थानम् । यदुक्तम्—

जीवहिंसामृषावादस्तैन्यान्यस्त्रीनिषेवनैः । परिग्रहकषायैश्च विषयैर्विवशीकृतः ॥ १ ॥

कृतघ्नो निर्दयः पापी परद्रोहविधायकः । रौद्रध्यानपरः क्रूरो नरो नरकभाग्भवेत् ॥ २ ॥"

पुनर्गुरुणोक्तम्—भो राजेन्द्र प्रस्तावादपरगतिद्वयलक्षणमपि शृणु—

[1]पिशुनागोमतिश्चैव मित्रे शाठ्यरतः सदा । आर्तध्यानेन जीवोऽयं तिर्यग्गतिमवाप्नुयात् ॥१॥

मार्दवार्जवसंपन्नो गतदोषकषायकः । न्यायवान् गुणगृह्यश्च मनुष्यगतिभाग्भवेत् ॥ २ ॥"

इति निशम्य पुनर्नृप आह—"यतो स व्याघ्रो मनुष्यवाणीं जजल्प, तत्किम् ? । येनाहं निषादविनाशनं कुर्वन् बलाद्रक्षितः" । इति प्रश्ने विहिते पुनः सूरिरुवाच—"नृपते तत्कारणं शृणु—सौधर्मकल्पे शक्रसामानिकः सुरोऽस्ति । तस्य प्राणप्रिया देवी च्युत्वा क्वापि मनुष्यभवे बभ्रम । तस्या देवाङ्गनाया रक्षपालसुरास्तद्वल्लभसुरसमीप इति पृच्छन्ति स्म—'हे स्वामिन्नस्मिन् विमाने कापि देवता भविष्यति न वा ?' । तदा तेनोक्तम्—'वनमध्य एका वानरी विद्यते, सा मृत्वेह समेष्यति'। इत्युक्ते तन्मध्यादेको देवो व्याघ्ररूपं विधाय तस्याः परीक्षार्थमिहागतः । तेन स दिव्यशक्तिर्व्याघ्रो मनुष्यवा-

१ पिशुने आगसि च पापे मतिर्यस्य स

विज्ञप्तः—" स्वामिन् वर्धाप्यसे । यतोऽद्य तव नगरोद्याने युष्मत्पिता श्रीघनरथनामा जिनः समवसृतोऽस्ति "। इति निशम्य स राजा हर्षप्रकर्षपूरितो रोमाञ्चितशरीरः संस्तस्मै पारितोषिकं सुवर्णादिकं महदानं दत्वा कुमारसंयुतो गजतुरङ्गमसामन्तमण्डलिकादिसमस्तपरिवारपरिवृतो महतोत्सवेन श्रीजिनेश्वरं नन्तुं समाययौ । तत्र समागत्य भगवन्तं प्रणिपत्य समस्तानपि तपोधनान् वन्दित्वा भक्तिभावितचित्तो यथास्थानं निषसाद । अत्रान्तरे स श्रीजिनः सर्वसाधारणगिरया समस्तजन्तूनां प्रतिबोधायेदृशीं धर्मदेशनां विदधे—"भो भव्या युष्माभिः श्रीजिनपूजने वन्दने च तथापूर्वज्ञानश्रवणे निरन्तरं प्रमादो न विधेयः । यः पुण्यवान् जीवो धर्मकर्मण्यप्रमत्तो भवेत् तस्य कष्टान्यपि सूरस्येव सुखानि स्युः "। इत्युक्ते गणधरश्चैको जिनं नत्वेति विज्ञपयामास—' स कः सूरनामा ? यो धर्मकर्मण्यप्रमत्तो बभूव ? '। इति पृष्टे भगवान् प्राह—" भो भद्र यदि तव श्रवणेच्छास्ति, तर्हि सावधानतया तदाख्यानं श्रूयताम्—

## अथ सूरराज ( वत्सराज ) कथा

इहैव जंबूद्वीपे भरतक्षेत्रे क्षितिप्रतिष्ठितं नाम पुरमस्ति । तत्र प्रजापालनतत्परो गुणरत्नमन्दिरं वीरसिंहनामा नृपतिरासीत् । तस्य नृपस्य शीलालङ्कारधारिणी चामाङ्गहारिणी धारिणी नाम प्रियाभवत् । एकदा स राज्ञी स्वप्नमध्येऽग्रे गच्छन्तं सुरेन्द्रं दृष्ट्वा जजागार । तदनन्तरं सा नृपप्रिया प्रातः समुत्थाय तं स्वप्नं स्वभर्तुः कथयामास । तदा राज्ञा स्वचित्ते विचार्य प्रोक्तम्—" प्रियेऽस्य स्वप्नस्य प्रभावात्पुत्रो भविष्यति । परं तु चलमानदेवेन्द्रदर्शनात् स पुत्रः किंचिच्चलाचलो भविष्यति "। इत्युक्ते क्रमेण परिपूर्णसमये पुत्रो जातः । तस्याभिधानं पितृभ्यां स्वप्नानुसारेण देवराज इति प्रतिष्ठितम् । तस्मिन् पुत्रे प्रवर्धमाने सति सा राज्ञी पुनरप्येकदा स्वप्नमध्ये शंखोज्वलं पुष्टदेहं निजोत्सङ्गवर्तिनं वृषभमेकं निरीक्ष्य जागरूका सती प्रातर्भूपं प्रतीति जगाद—" स्वामिन्मया-

वेशयत् । द्वितीयपार्श्वे तीक्ष्णक्षुरिकया स्वाङ्गच्छेदं कृत्वा कृत्वा मांसखण्डानि चिक्षेप । एवं सर्वशरीरसंभवं मांससमुच्चयं यथा यथा तत्र क्षिपति स्म, तथा तथा स पारापतोऽधिकतरमवार्धिष्ट । तदा स साहसिकशिरोमणिस्तं पारापतं गुरुतरं ज्ञात्वा स्वप्रतिज्ञापूरणाय स्वयं तुलायामुपविष्टः । तदा सकलोऽपि लोकस्तं नृपं तुलारूढं दृष्ट्वा हाहाकारं कुर्वन् सविषादतयेत्थं प्रोक्तवान्—“ हा नाथ! जीवितत्यागसाहसं कथं करोषि ? । एकस्य पक्षिणः कार्येऽस्मान् प्रति कथमवगणयसि ? तदेदं किञ्चिदौत्पातिकं संभाव्यते । अन्यथास्य लघुकायस्य पक्षिणः शरीर ईदृशो भारः कथं भवति? ” । इत्युक्ते स ज्ञानवानपि परोपकाररसिकतया सरलत्वेन स्वज्ञानं न प्रयुङ्क्ते स्म । इदमेव चिन्तयामास—“ इह जगति ते धन्याः ये स्वयमङ्गीकृतं कार्यं निर्वाहयन्ति । अयं सर्वोऽपि परिवारजनः स्वार्थवशान्मां निवारयति, परं त्वसारस्य शरीरस्य सारं परोपकारं करोमि । अमीषामाग्रहेण स्वार्थभ्रंशं कथं करोमि ? । यद्भवति तद्भवतु । पुनरहं स्वप्रतिज्ञां पूरयिष्ये ” । स यावदिति चिन्तयति स्म, अत्रान्तरे चलत्कुण्डलाभरणः सर्वाङ्गेषु विभूषणविराजमानो दिव्यदेहधारी कश्चित् सुरः प्रकटीभूयेति जगाद—“ भो महीपते त्वं धन्योऽसि । भो वीरशिरोमणे तव जन्मजीविते सफले । येन कारणेनाद्येशानेन्द्रस्तव निर्मलं गुणग्रामं सभामध्ये प्रशशंस । तदाहं तां व्यावर्णनामसहमानस्त्वत्परीक्षार्थमिह समागतः । तदनन्तरं मयेमौ पूर्वमत्सरिणौ द्वावपि पारापतश्येननामानौ खगौ वनमध्ये समधिष्ठितौ ” । इत्युक्ते देवपार्श्वे नृपः पप्रच्छ—“ हे देवानयोः पक्षिणोः कुतो वैरं संजातम् ? तत्कथ्यताम् । यतोऽस्माकं महत्कौतुकं वर्तते ” । इत्युक्ते त्रिदशोऽवादीत्—“ अत्रैव नगरे पूर्वसागरनामा वणिग् वभूव । तत्प्रिया विजयसेनाभवत् । तयोर्धनदत्तनन्दननामानौ द्वौ सुतौ संजातौ । क्रमेण प्रवर्धमानौ द्वावपि वाणिज्यकलाकुशलावभूताम् । एकदा तौ पितरौ समनुज्ञाप्य सार्थेन सह वाणिज्यार्थं नागपुराभिधं पुरं जग्मतुः । तत्र ताभ्यां वाणिज्यं कुर्वद्भ्यां कथंचिद्दैवयोगेन

दृष्ट्वा कलाचार्य इति दध्यौ—'अयं कोऽपि बालरूपोऽपि शस्त्रकर्मणि विचक्षणोऽस्ति, य एवं वेत्ति'। इति विमृश्य तेन कलापरिकृतेन पृष्टम्—'भो वत्स त्वं कुतः समागतः ?'। तदा वत्सराजेनोक्तम्—'ताताहं वैदेशिकोऽस्मि'। पुनः स प्राह—'हे भद्र स्वहस्ते शस्त्रं कृत्वा एकवारमात्मीयं शस्त्रकौशलमस्मदग्रे प्रकाशय'। इत्युक्ते तेन वत्सराजेन प्रस्तावं विज्ञाय स्वकीयशस्त्राभ्यासस्तेषामग्रे प्रकाशितः। एतावता तेषां कुमाराणां तत्रैव भोजनं समागतम्। तदा ते सर्वेऽपि भोजनं कर्तुमुपविष्टाः। तदा तैः कुमारैस्तत्कलाभ्याससंतुष्टैर्महताग्रहेण स वत्सराजोऽपि भोजितः। तदनन्तरं स संध्यां यावत्तत्रैव तस्थौ। एतावता रक्षपालं विना वत्सरूपाणि सकालेऽपि (शीघ्रतया) स्वयं गृहे गतानि। तदा श्रेष्ठिना विमलाधारिण्यौ प्रति निगदितम्—"अद्य वत्सरूपाणि सदिवसेऽप्यागतानि, तत्किं कारणम् ? अमीषां रक्षको भवत्पुत्रः समाययौ न वा ?"। तदा विमलया प्रोक्तम्—"श्रेष्ठिन्निमानि वत्सकानि सकालेऽपि समागतानि, तत्कारणं किमपि न जाने, परं वत्सराजो नाद्यापि समागतोऽस्ति"। इत्युक्ते सति सन्ध्यासमये स वत्सराजः समागतस्तदा मात्रा मातृष्वस्रा च तस्येति निगदितम्—'वत्सेयती वेला तव क्व लग्ना ?'। तदा तेनोक्तम्—"मातरहं वत्सकानि चरणाय मुक्त्वा बहिः सुप्तोऽभूवम्। मम निद्रा समागता। केनाप्यहं न विबोधितः। स्वयमेव जागरितः"। इत्युक्ते ताभ्यां किमपि नोक्तम्। तदनन्तरं द्वितीयेऽपि दिने स्वयं कलाभ्यासरसे स्थितः, वत्सरूपाणि सकालेऽप्यागतानि। तृतीयेऽपि दिने तथैव संजातम्। तदा श्रेष्ठिना तयोर्धारिणीविमलयोरग्र उपालंभः प्रदत्तः "यदयं वत्सराजो वत्सकानि विमुच्य न ज्ञायते क्वापि याति। वत्सकानि सकालेऽपि समागच्छन्ति"। इति निगदिते सति ताभ्यां सरोषतया तस्य वत्सराजस्य कथितम्—"अरे तव किमेतद्विस्मृतं ? यत्परदेशे समागत्य परगृहे कर्मकरत्वं क्रियमाणमस्ति। भोजनमपि कष्टेन प्राप्यते। ईदृशे संयोग उपालंभान् वत्स कथं दापयसि ?"।

ल सुखशय्यायां प्रसुप्तया कैलास इवोज्ज्वलः स्वप्ने वृषभो दृष्टः । तत्प्रभावात् किं फलं भविता ?" । इति कथिते राज्ञा गदितम्—" हे देव्येतत्स्वप्नप्रभावात्पुत्रो भावी । परं स सुतो राज्यभारधौरेयो महाबलवान् भाग्यवान् संपत्स्यते " । इति विचारं समाकर्ण्य धारिणीप्रियापि हर्षधारिणी बभूव । क्रमेण शुभवेलायां सुते जाते सति तेन राज्ञा दशाहिकानन्तरं सर्वस्वजनं स्वमन्दिरे समाकार्य भोजयित्वा वस्त्रताम्बूलादि दत्त्वा रामस्तत्स्वजनसमक्षं स्वमानुसारेण तस्य पुत्रस्य वत्सराज इत्यभिधानं विनिर्मितम् । सोऽपि क्रमेण प्रवर्धमानोऽष्टवार्षिको जातस्तदा महाप्राज्ञतया कलाचार्यसमीपे सर्वा अपि कलाः पपाठ ॥

अन्यदा तत्पिता वीरसिंहो नृपः स्वशरीरे दाहज्वरादिमहारोगाधिग्रस्तो बभूव । तदा समग्रोऽपि नृपपरिवारस्तं स्वामिनं विषमरोगार्दितं वीक्ष्य दुःखितोऽभूत् । इतश्च लोकाः सर्वेऽप्येकत्र संभूयेत्यालोचयन्ति स्म—" अयं देवराजनामा नृपाङ्गजो यद्यपि वयसा ज्येष्ठो विद्यते, पुनस्तथापि गुणज्येष्ठोऽयं वत्सराजो नृपो भवति, तर्हि भव्यम् " । ईदृशीं लोकोक्तिं श्रुत्वैकेन मंत्रिणा सहालोच्य देवराजेन गजादिकं सैन्यं स्वायत्तं चक्रे । एतावता वीरसिंहनृपेण महाव्याधिनिपीडितेनापि जनमुखात्तं संबन्धं समाकर्ण्येति समाख्यातम्—" अहो तेन मंत्रिणा कार्यमेतदयुक्तं कृतम् । यदयं वत्सराजकुमार एव राज्ययोग्यो नापरः । परमीदृशस्वरूपोऽहं किं करोमि ?" । इत्युक्त्वा स नृपतिरायुःक्षये विपन्नः । तदनन्तरं देवराजेन पैतृकं राज्यं जनानुरागं विनापि समाश्रितम् । ततः परं वत्सराजोऽपि विनयादिगुणान्वितः सन् पितृवद्देवराजस्य प्रणामादिसत्क्रियां चकार । तथापि देवराजपक्षकारी सचिवः रामस्तमपि जनं तस्मिन् वत्सराजे सानुरागं ज्ञात्वेति दध्यौ—" अयं वर्धमानो राज्यं हरिष्यति । यदुक्तं नीतिसारे—

तदस्मिन्नहिते स्वस्य नोपेक्षा युज्यते खलु ।
कोमलोऽपि रिपुश्छेद्यो व्याधिवद्बुद्धिशालिना ॥१॥ "

राज्यापहारः प्रथमं देशान्तरगतिस्ततः। परवेश्मनिवासश्च तथा कष्टेन भोजनम् ॥ १ ॥

हा पुत्र प्रेषितोऽस्यद्य त्वमिन्धनकृते कथम्। आवकाभ्यामधन्याभ्यां यदद्यापि समेषि न ॥ २ ॥ "

ते द्वे अपि खेचर्याविति श्रुत्वा तदीयं वृत्तान्तं ज्ञात्वा तत्र देवकुले समागत्य वत्सराजस्य मातृमातृष्वस्रोः स्वरेणैवं जजल्पतुः—" हे वत्सराजावां त्वद्वियोगार्त्या सकलेऽपि पुरे भ्रान्त्वा भ्रान्त्वेहायाते। स्वमात्मानं दर्शय "। इत्युक्ते स प्रासादमध्यस्थित इति दध्यौ—" मम मातृमातृस्वस्रोरागमनं सांप्रतं न घटते। नूनमेते ते एव खेचर्यौ मायया कञ्चुकार्थमनेकरूपां विडम्बनां कुरुतः"। इति ध्यात्वा स मतिमान् वाक्यमपि न ददौ। तदनन्तरं सूर्योदयसमये संजायमाने सति गाढस्वरेण पूत्कृत्य पूत्कृत्य स्वस्थानं गते। ततः परं कुञ्चिकाविवरेणोद्योतं समालोक्य स वत्सराजः कपाटोद्घाटनं विधाय बहिर्निर्गत्य श्रीखण्डतरुकोटरे तं कञ्चुकं संगोप्य कावाकृतिं गृहीत्वैकं सामान्यकाष्ठं करे कृत्वा गेहाभिमुखं समागच्छन् पुरद्वारे समागतः। तत्र दौवारिकस्य हस्तस्थितं काष्ठं दत्वा तस्य गृहं गच्छतो यत्र यत्र चन्दनपरिमल उत्थितस्तत्र तत्र समग्रोऽपि जनो विलोकयति, इति च विचिन्तयति—' चन्दनगन्धः कुतः स्फुरति ?'। इति विस्मयं धृत्वा तं काष्ठभारवाहकं विलोक्येति चिन्तितम्—" वायुयोगात्कुतोऽपि गन्धः समागच्छन्नस्ति '। जनेष्विति विमृशनां कुर्वत्सु स स्वगेहे समागत्य मध्ये प्रविश्य तानि काष्ठखण्डान्येकत्र संगोप्य तन्मध्यादेकं खण्डं मातृष्वसुः करे समर्प्य वत्सराजेनोक्तम्—" हे मातृभगिनि त्वया सौगन्धिकहट्टे गत्वैतद्विक्रीय यावन्मात्रं धनं समागच्छति, तावन्मात्रं समानय "। इत्युक्ते तया विमलया तच्चन्दनखण्डं विक्रीय प्रचुरं धनं समानीय वत्सराजस्य दर्शितम्। तदा वत्सराजेन तयोरिति निगदितम्—" अथ युवा-

इति निगदिते तेन मातृष्वस्रग्रे प्रोक्तम्—'अहं वत्सकानि न चारयिष्यामि । अस्य व्यवहारिणोऽग्र इति निगद्यम्'। तदा श्रेष्ठिनोऽग्रे जनन्या निवेदितम्—"अयं मत्पुत्रो बालरूपो मुग्धतया क्रीडां करोति । भवतां वत्सकानि न चारयति । अस्माभिर्धनमपि कथितम्, परं स बालत्वान्न मन्यते"। ताभ्यामश्रुपातं विधायेति निगदिते श्रेष्ठिना सदयत्वेन तयोरित्युक्तम्—'बाला ईदृशा इच्छानुरूपा भवन्ति'। इत्युक्ते ते द्वे अपि मौनमाश्रित्य स्थिते। अथ वत्सराजो निरन्तरं प्रातरुत्थाय तेषां कुमाराणां पार्श्वे गत्वा कलाभ्यासं करोति, तत्रैव भुंक्ते। एकदाऽम्बया पृष्टम्—'रे वत्स सन्ध्यां यावत् क्व तिष्ठसि ? क्व गच्छसि ? भोजनं कथं करोषि ?'। तदा तेनोक्तम्—"यत्र कुमाराः कलाभ्यासं कुर्वन्ति। तत्राहं गच्छामि। तैः सह कलाभ्यासं करोमि। तत्रैव भोजनमपि मया विधीयते"। इत्युक्ते धारिणी माता साश्रुलोचना सती तं पुत्रं प्रतीति जगाद—"हे वत्स त्वमावयोश्चिन्तां कथं न करोषि ? हे नन्दनात्मीयगृहे इन्धनानि न सन्ति । कुतोऽपि समानयसि तर्हि भव्यम्"। इति जननीवचः श्रुत्वा स प्राह—"मातः श्रेष्ठिपार्श्वात्कुठारिका कावाकृतिश्च यावता मम प्रदीयताम्। यथाहं बहिर्वनान्तरे गत्वा सारमिन्धनं समानयामि"। इत्युक्ते ताभ्यां तत्कुठारिकादिकं याचित्वा तस्मै समर्पितम्। तदनन्तरं स वत्सराजः प्रभाते कुठारिकादिसमुदायं गृहीत्वाटवीमेकां ययौ। तत्र नानाविधान् द्रुमान् पश्यन्निति दध्यौ—"यदि प्रवरः कोऽपि चन्दनद्रुमो भवति, तर्हि तस्य काष्ठैर्दारिद्र्यमुन्मूलयामि। जननीमातृष्वस्रोः समीहितं पूरयामि"। इति विचिन्त्य तत्रैव वनमध्ये परिभ्रमणं कुर्वता तेन देवकुलिका दृष्टा। तन्मध्ये सप्रभावां यक्षप्रतिमां विलोक्य प्रणिपत्य स यावदूर्ध्वोऽस्ति, तावद्दूरतः शुभगन्धं समाघ्रायेति व्यचिन्तयत्—'नूनमत्र वने क्वापि चन्दनद्रुमोऽस्ति'। इति विमृश्य सादरं विलोकयता तेनैकत्र सर्पवेष्टितश्चन्दनद्रुमो दृष्टः। तं विलोक्य साहसेन तं वृक्षं प्रकंप्य ( धूनयित्वा ) ते विषधराः सर्वेऽपि निर्घाटिताः।

किं च—ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे विष्णुर्येन दशावतारगहने क्षिप्तः सदा सङ्कटे ।
रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥ ३ ॥

इति विमृश्य मनसि चिन्ता न कर्तव्या ”। इति निगद्य तया राजपत्न्या सहर्षितया तयोर्भगिन्योरिति निवेदितम्—‘ इमां हस्तिनीं समारुह्य पुत्रेण सह युवाभ्यां मम गृहे समागम्यताम् ’। इत्युक्ते ते द्वे अपि श्रेष्ठिनं प्रतीति जगदतुः—‘ आवाभ्यां त्वद्गृहे संस्थिताभ्यां यत्किंचित्तवाप्रियं कृतं, तत्त्वया क्षम्यताम् ’ । श्रेष्ठिना तदा प्रोक्तम्—‘ मया वणिग्मात्रेण युवां यत्कर्म कारिते, तद्युवाभ्यां क्षन्तव्यम् ’। इति कथयित्वा श्रेष्ठी चरणयोर्निपतति । तदनन्तरं ते द्वे अपि वत्सराजेन समं भगिन्या उपरोधेन नृपमन्दिरे जग्मतुः । तदानीं स राजा तयोर्निवासयोग्यं समग्रसामग्रीसमन्वितं प्रवरं मन्दिरं दत्वा वत्सराजं प्रत्युवाच—‘ वत्स तव किं ददामि ’। इति निगदिते तेन भणितम्—“ स्वामिन्नहं दिवसे तव सेवां करिष्ये, तथा रात्रौ त्वयाहं गृहे प्रेष्यः । त्वत्समीप एतद्याचे । अपरं किमपि न प्रार्थयामि ”। तदा राज्ञा तत्प्रतिपन्नम् । ततः परं स नृपसेवां कर्तुं लग्नः । नृपेण तदीये गृहे धान्यघृतादिकं यद्विलोक्यते, तत्सर्वं प्रचुरमपि प्रेषितम् । तेन ते सुखेन तिष्ठन्ति ।

अन्यदा भूपतिस्तं वत्सराजं विसृज्य रात्रौ सुप्तः । परितस्तद्गृहं यामिकैर्वेष्टितम् । तदा वत्सराजः करेण खड्गं विधृत्य वासगृहस्य बहिर्विनीतत्वेन तस्थौ । एतावता मध्यरात्रिसमये राजा जागरितः सन् कस्याश्चिद्दुःखिन्याः स्त्रियाः करुणस्वरेण रुदनं शुश्राव । तदा राज्ञा सर्वे प्राहरिकानरा आलापिताः । पुनः प्रमादेन ते प्रसुप्ताः सन्तः प्रत्युत्तरं न ददुः । तदानीं वत्सराजो जजल्प—

भ्यां परगृहे कर्म न कर्तव्यम् । यत्किञ्चिदन्नपानादिकं विलोक्यते तदनेन वित्तेन विधेयं । श्रेष्ठिनो भाटकमपि यथायोग्यं देयम् । अ-
क्षिणिष्ठिते पुनरपरं खण्डं गृहीत्वा चतुष्पथे विक्रीय धनं कर्तव्यम् एतानि चन्दनकाष्ठानि सन्ति । एतत्प्रसादेन धनस्य न्यूनता भव-
दगृहे न भविष्यति । अथ भवतीभ्यां पराधीनत्वेन न स्थेयम् । अहं तु स्वेच्छया समग्रमपि दिनं क्रीडयिष्यामि । रात्रौ शयनार्थं स-
तत्रं गृहे समेष्यामि । किमप्यसौख्यं युवाभ्यां न धार्यम् "। इति कथयित्वासौ वत्सराजः कुमाराणां समीपे ययौ । तदा तैरुक्तम्—
' हे भ्रातः कल्ये त्वं कथं नात्र समागतः ? '। तदा वत्सराजेन प्रोक्तम्—' शरीरे तादृशं निरामयत्वं नाभूत्, तेनाहं नागतः '। त-
तोऽनन्तरं राजकुमारैर्बभाषे—" भो मित्र वयं भवदीयं सदनं न विद्मः । अन्यथा त्वन्मिलनाय समागता अभविष्याम "। इत्युक्ते
वत्सराजः प्रमुदितः । ततः परं कलाचार्येण वत्सराजसमीपे पृष्टम्—' भोः सत्पुरुष तव किं कुलम् ? कस्तव पिता ? का जननी ?
क्व त्वदीया जन्मभूमिः ? ' । इत्युक्ते तं कलाचार्यं प्रति वत्सेन समाख्यातम्—' एतन्मदीयं स्वरूपं सांप्रतं न गदनीयम् । प्रस्तावे
सर्वमपि कथयिष्यामि ' । इति निगदिते तैः कुमारैस्तद्भावं विज्ञायाकारगोपनमेव निधाय तस्मै वत्सराजाय भोजनवस्त्रादिकं सर्वमपि
परमप्रीत्या प्रदत्तम् ॥

अथैकदा कलाचार्यस्तान् सर्वान् कुमारान् गृहीत्वा वत्सराजमपि सार्धं समाकार्य राजसमीपे ययौ । तदनन्तरं ते कुमारा
नृपं प्रणिपत्य यथास्थानमुपविष्टाः । तदा नृपेण तं वत्सराजकुमारं नवीनं दृष्ट्वा तेषां समीपे पृष्टम्—' हे वत्सा युष्मदन्तिके कोऽयं
कुमारो दृश्यते ? ' इति पृष्टे तैरुक्तम्—' अस्मावस्माकं प्रतिपन्नबान्धवो वर्तते '। तदनन्तरं राज्ञा कलाचार्यसमीपे पृष्टम्—' अयं
कस्य नन्दनः । अस्य विज्ञानं कीदृशं विद्यते ? '। इति नृपेण प्रोक्ते स कलापण्डितोऽवादीत्—" हे स्वामिन्नहमस्य कुमारस्य

तम्—' सा पापात्मिका दुष्टदेवता पुरुषाणां छलनायैवंविधं कर्म करोति ' । पुनः केनापि पृष्टम्—' स्वामिन् देवताः किं मांसं खाद-
न्ति ?' । तदा स्वामिना कथितम्—' खादन्ति न, परं तासामियं क्रीडा ' ।

तदनन्तरं वत्सराजस्तत्परिधानशाटकं गृहीत्वा स्वगृहं गत्वा यावत्सुप्तस्तावत्प्रभातं जातम् । ततः प्रभाते जाते तद्वस्त्रमा-
दाय स राज्ञः समीपे समागत्य प्रणामं विधाय यथास्थाने यदा निपण्णस्तदा राज्ञा प्रस्तावं वीक्ष्य रात्रिवृत्तान्तस्तत्पार्श्वे पृष्टः । तदानीं
वत्सराजेनापि समाचारः समग्रोऽपि नृपाग्रे निवेदितः । तद्देवतानीतं वस्त्रं नृपस्य समर्पितम् । ततः परं भूपोऽपि तद्दिव्यवस्त्रं रत्नमणिरु-
तशान्तं दृष्ट्वा विस्मितः । तदा वत्सराजभाषितं सर्वं सत्यमेव मेने । ततश्च भूभुजा समीपनिविष्टाया राज्ञ्याः कमलश्रीनाम्न्यास्तद्दिव्यवस्त्रं
प्रददे । तदा तया राजप्रसादं प्राप्य तत्क्षणमेव तत्परिधानवस्त्रं प्रावृतम् । तदाग्रेतनः कञ्चुको न शोभते । शाटकसदृशो कञ्चुको वि-
लोक्यते । 'हे प्राणेश यदि शाटकसदृशः कञ्चुको भवति तदा सुन्दरम् ' । इत्युक्ते नृपेण वत्सराजस्य प्रोक्तम्—' हे वत्सराज! तव
मातृष्वसुः शाटकसदृशः कञ्चुको विलोक्यते' । तदा वत्सराजेन भाषितम्—'स्वामिन् सोऽपि भविष्यति ' । इति निगद्य बहिर्वनम-
ध्ये गत्वा चन्दनतरुकोटरस्थितं तं खेचरीकञ्चुकं प्रवररत्नजटितं समानीयासौ कुमारस्तदीयं संवन्धं नृपाग्रे निगद्य भूपतेरर्पयामास । ततः
क्षोणीभुजा स कञ्चुकः प्रियायै प्रदत्तः । ततः परं देव्या स कञ्चुकस्तत्कालमेव हर्षितचेतसा परिदधे । तदनन्तरं तयोः शाटककञ्चु-
कयोरसदृशं चोत्तरीयवस्त्रं निरीक्ष्य सा राज्ञी पुनरपि हृदयेऽधृतिं चकार । यथा यथा लाभः स्यात्तथा तथा लोभो वर्धते । इति वि-
मृश्य राज्ञा पृष्टम्—' प्रिये मनोऽभीष्टे कञ्चुकेऽपि समागते त्वं कथं श्यामवदना दृश्यसे ? ' । तदा तया प्रोक्तम्—' ईदृशमुत्तरीयव-
स्त्रं विलोक्यते ' । तच्छ्रुत्वा राजा दध्यौ—' अहो अतृप्ताः स्त्रियो वस्त्रालङ्करणादिभिः कदाप्येता न तृप्यन्ति । यदुक्तम्—

'स्वामिन् यत्किमपि कार्यं भवति, तन्मम समादिश्यताम्'। इत्युक्ते राज्ञा भणितम्—'वत्साद्य किं त्वं मया न विसृष्टोऽसि?'। आमेति तेन भणिते नृपेणोदितम्—'भो वत्सराजाधुना विसृष्टोऽसि, गृहं याहि, आदेशदानं तव नोचितम्'। एवमुक्ते स प्राह—"स्वामिंस्तवादेशं कुर्वतो मम का लज्जा? यत्कार्यं भवति, तत्कथ्यताम्। अवश्यमेव करिष्यामि"। तदा नृपोऽवादीत्—"हे वत्सेयं का स्त्री रोदिति? तत्र गत्वा दुःखकारणं पृष्ट्वेमां कामिनीं दीनस्वरेण रुदतीं प्रतिषेधय"। ततः स नृपवाक्यं तथेति कृत्वा शब्दानुसारेण प्राकारलङ्घनं विधाय स्मशानभूमिमध्ये ययौ। तत्र चैकस्मिन् प्रदेशे सद्धस्त्रालङ्कारसमलङ्कृतां बालामेकां रुदतीं विलोक्य तत्पार्श्वे इति पप्रच्छ—"हे मुग्धे त्वं का? अत्र स्मशानमध्ये कथं रोदिषि? यदि गोप्यं न भवति तर्हि स्वकीयं दुःखकारणं ममाग्रे कथय"। इत्युक्ते सा प्रोवाच—"भोस्त्वं यत्र चलितोऽसि तत्र गच्छ, तवासमर्थस्यानया मम चिन्तया किं कर्तव्यमस्ति?"। ततः पुनर्वत्सराजोऽवादीत्—"त्वां दुःखिनीं दृष्ट्वाहं कथं गच्छामि? भवन्ति साधवो यस्मात्परदुःखेन दुःखिताः"। इत्युदिते तया प्रोक्तम्—"यस्य कस्याप्यग्रे दुःखं न कथ्यते। यदुक्तम्—

'जो न वि दुक्खं पत्तो, जो न वि दुक्खस्स निग्गहसमत्थो।
जो न वि दुहिए दुहिओ, ता कीस कहिज्जए दुक्खम्॥ १॥"

तदा वदमानं वत्सराजेन प्रोक्तम्—"भद्रे शृणु—

---

१ यो नापि दुःखं प्राप्तो यो नापि दुःखस्य निग्रहसमर्थः। यो नापि दुःखिते दुःखितः तस्य कथं कथ्यते दुःखम्॥

रम् ? । हा हा अहं दैवेन नारीरूपा मारी कथं विनिर्मिता ? । यत ईदृशमनुष्यरत्नानामहं विनाशकारिणी वर्ते " । यावता सेति
व्यचिन्तयत्तावता वत्सराजस्तदीयशय्यासमासन्न एवोपविश्य मधुरालापैस्तां कन्यां तथा रञ्जयामास, यथा सेति दध्यौ—' अहमात्मान-
मपि हत्वा कथमप्येतस्य जीवितं रक्षामि ' । एवं चिन्तयन्ती सा कन्या निद्राकुला बभूव । एतावता साहसिकशिरोमणिः सकुमारो
गवाक्षमार्गेणाधः समुत्तीर्य भूमिगतं काष्ठमेकमादाय तेनैव मार्गेण पुनश्चटित्वा तत्रागत्य शय्यायां काष्ठं निवेश्य वस्त्रेणाच्छाद्य तरवारीमा-
कृष्य समस्ता दिशो विलोकयन् यावता दीपच्छायायां तस्थौ तावता गवाक्षविवरेण प्रविश्यमानं मुखमेकं प्रेक्ष्य स कुमारो विशेषेण
सावधानो बभूव । तदनन्तरं तस्मिन् वासगृहे मुखे विलोकिते सति मनोज्ञमुद्रिकालङ्कृताङ्गुलिरेको हस्तस्तत्र प्रविष्टः । पुनः स ओपधी-
वलयद्वितयेन मण्डितो वर्तते । तन्मध्य एकस्मौपधीवलयाद्धूमो विनिर्गतः । तेन धूमेन समस्तमपि गृहं व्याप्तम् । ततः स करो यावता
प्रविश्य यामिकस्य शय्यां स्पृष्टवान् तावता वत्सराजेन स हस्तस्तीक्ष्णखड्गेन हतः । परं तु दैवतशक्तिप्रभावात्स हस्तश्छिन्नोऽपि भूमौ
न पतितः, परमौपधिवलयद्वयं तस्मात्कराच्छेदनार्तत्वेन पतितम् । एका धूमौपधी, द्वितीया संरोहिणी । ते द्वे अपि महौपध्या कुमारो
जग्राह । ततः परं स देवताकरस्तस्माद्वासगृहान्निर्गतः । तदनन्तरं ' हा वञ्चितास्मि ' इति दैवतं शब्दं श्रुत्वा स वत्सराजो ' रे दा-
सि क्व यासि ' इति जल्पन् किञ्चित्पृष्ठे गतस्तदा तया तं समुत्पाटितखड्गं पुण्येन बलिष्ठं वत्सराजं पृष्ठे समागच्छन्तं वीक्ष्यास्य
पराभवं कर्तुमक्षमा सती तत्क्षणमेव नष्टा । ततोऽनन्तरं वत्सराजः पश्चाद्वलित्वा शय्यातः काष्ठमपनीय यावत्तत्रोपविष्टस्तावता रात्रिः क्षयं
गता, उदयाचलचूलिकायां सूर्य उदयं प्राप्तः । अत्रान्तरे सा कुमारी प्रभाते तं कुमारमक्षताङ्गं निरामयं विलोक्य सहर्षिता सतीति
व्यचिन्तयत्—" नूनमस्यैव पुरुषरत्नस्यायं कोऽपि प्रभावो भविष्यति, यदयं न विपन्नः । अथवा मम भाग्यानि जाग्रति । यदसौ मम

अग्निर्विप्रो यमो राजा समुद्र उदरं स्त्रियः । अतृप्ता नैव तृप्यन्ति याचन्ते च दिने दिने ॥ १ ॥

अविद्यमानस्य वस्तुनोऽर्थे निरर्थकं लोभं मा

एषामीदृशं स्वभावं विज्ञाय नृपेणोक्तम्—' हे देवि निर्विवेकिनि
' शाटककञ्चुकसमं यदा प्रावरणं लप्स्ये, तदा

कुरु '। इत्युक्ते तस्या विशेषेण कदाग्रहो जातः । तदा तया नृपसमक्षमित्युक्तम्— " भोः साहसिक

भोजनं करिष्ये '। इत्युक्त्वा मन्दिरमध्ये सा राज्ञी प्रविष्टा । तदनन्तरं नृपेण वत्सराजं समाकार्य प्रोक्तम्—" भोः साहसिक

त्वया दिव्यवस्त्रे समानीय महानर्थो विहितः । अतः कारणात्त्वमेवेमां त्वदीयां मातृष्वसारं कमप्युपायं कृत्वा संतोषय । त्वां विनाऽपरः

कोऽप्यस्य व्याधेश्चिकित्सको नास्ति "। इत्युक्ते तेन मातृष्वसारं प्रति गाढमाग्रहं विधाय प्रोक्तम्—' कदाग्रहं विमुच्य भोजनं क्रिय-

ताम् । कुतोऽपि विलोक्योत्तरीयमपि समानेष्ये '। एवं प्रोक्तापि सा राज्ञी स्त्रीस्वभावेन कदाग्रहं न मुमोच । तदनन्तरं वत्सराजेन

नृपसमक्षमियं दुस्तरा प्रतिज्ञा चक्रे—" यदि षण्मासाभ्यन्तरे देव्याः समीहितं वस्त्रं न समानयामि तर्हि निःसंदेहतया वह्नौ प्रविशा-

मि "। इति वत्सराजवाक्यं समाकर्ण्य राज्ञा निगदितम्—' भो भद्रेदृशीं प्रतिज्ञां मा कुरु '। इत्युक्ते सोऽवादीत्—" हे प्रभो

त्वत्प्रसादेन सर्वं भव्यं भविष्यति । शीघ्रमेव मां देशान्तरे प्रेषय "। इति समाख्याते तेन भूभुजा स्वहस्तगतं ताम्बूलं दत्वा स देशा-

न्तरं प्रति विसृष्टः । तदनन्तरं स स्वगृहे गत्वा मातृमातृष्वस्रोश्चरणौ वन्दित्वा तं समाचारं समग्रमपि तयोरग्रे कथयित्वा तयोः समीप

आदेशं प्रार्थयामास । तदा ताभ्यामनिच्छन्तीभ्यामपि पुत्रस्य कष्टं निरीक्ष्यापि दीर्घबुध्ध्या विमृश्येत्युक्तम्—' हे वत्स तव विजयो

भूयात् '। इति जनन्योराशिषं शिरसि चटाप्य किञ्चिन्मातृदत्तं पाथेयं सार्थे समादायोपानहौ परिधाय खड्गखेटकसमन्वितो वत्सराज-

स्तस्या नगर्या विनिर्ययौ ॥

इत्युक्ते वत्सराजेन आमेति भणितम् । तदा सा संतुष्टा सतीति प्रोवाच—'भो भद्राहं त्वत्साहसेन तुष्टा । किमपि स्वेच्छया याचस्व' । इति कथिते तेन याचितम्—" मन्दिरस्योपरिभूमिस्थं तत्कन्यायुगलं तुरङ्गमरूपो यक्षः सर्वकामदश्च पर्यङ्कः । एतावन्मात्रं देहि" । इत्युक्ते तया चिन्तितम्—'अनेन गृहभेदादेवैतद्याचितम् । अन्यथासौ कथं जानाति ?' । इति विचिन्त्य तया प्रोक्तम्—"भोः सत्पुरुष मया तवैतत्प्रदत्तमेव । परं तु सावधानतयास्य कन्यायुगलस्योत्पत्तिं शृणु—वैताढ्यपर्वते चमरचञ्चापुर्यां गन्धवाहगतिनामा विद्याधरनरेश्वरोऽभूत् । तस्य द्वे प्रिये अभूताम् । एका सुवेगा द्वितीया मदनवेगा । तयोः कुक्षिसंभूते द्वे सुते क्रमेण रत्नचूलास्वर्णचूलाना-म्न्यौ संजाते । ते द्वे अपि यावता यौवनं प्राप्ते तावता नृपस्तयोः पुत्र्योर्विवाहचिन्तया व्याकुलो बभूव । एतावता तत्र कश्चिज्ज्ञा-नी महामुनिः समायातः । तदा राज्ञा तस्य मुनिपुङ्गवस्यासनप्रतिपत्तिं विधाय भक्तिपूर्वं नमस्कृत्य तस्यैव मुनेः पार्श्वे इति पृष्टम्—'हे मुने एतयोः पुत्र्योः को भर्ता भविष्यति ?' । तदा मुनिना ज्ञानेन विज्ञायेति निगदितम्—" भूचरनृपपुत्रो गुणवान् वत्सराजनामानयो-र्भर्ता भविष्यति । परं भो राजंस्त्वत्सन्निधावेतयोः पाणिग्रहणं न भविष्यति । यतस्तवायुर्मासमात्रमेव वर्तते " । इत्युक्ते राजा प्राह—'तर्हि मया किं कार्यम् ?' । तदा मुनिरवादीत् —भो नरेन्द्र श्रूयताम्—स वत्सराजकुमारो यथानयोर्भर्ता भविष्यति तत्कथयामि । भो राजन् पूर्वमेका तव भगिनी बभूव । सा त्वत्पित्रा भूचारिणः स्वमित्रस्य शूराभिधाननृपस्य दत्ता । तदनन्तरं तस्य नृपस्य द्वितीया काचिच्छुभाकारा नृपपुत्री कान्ता बभूव । तस्यां प्रेमप्रकर्षोऽतीव संजातः । तव स्वसा तस्य नृपस्यानिष्टाभूत् । ततः सा वि-द्वेषतोऽज्ञानकष्टं कृत्वा मृत्वा व्यन्तरी देवता जातास्ति । तदीया या सपत्नी समभूत्, सापि कियता कालेन दानपुण्यं कृत्वा विपद्य दत्तश्रेष्ठिनः सुता श्रीदत्तानाम्नी जाता । इतश्च पूर्वभवमत्सरात्सा देवी तस्या यासिकं नरं हन्ति । अद्यापि तत्र पुरुषद्वयो वर्तते । हे

भर्ता भवति, तर्हि विषयसुखं भुञ्जे । अन्यथेह जन्मनि मम विषयसुखानां निवृत्तिरेव "। इति विचिन्त्य सा वत्सराजं प्रति मधुरस्वरेण बभाषे—' हे नाथ त्वं कथं कष्टान्मुक्तस्तन्निवेदय '। इति पृष्टे तेनापि समग्रमपि रात्रिवृत्तं तस्या अग्रे यथातथं कथितम् । तदानीं सा कन्या तं संबन्धं श्रुत्वा संजातरोमाञ्चा सती मुदं दधौ । एतावता तयोर्वार्तां कुर्वतोः कन्यापरिचारिका दासी मुखप्रक्षालनाय जलमादाय तत्र समागता । तदा सापि चेटी कुमारमक्षताङ्गं विलोक्य सहर्षा सती तदीयक्षेमवार्तया श्रेष्ठिनं वर्धापयामास । तदा श्रेष्ठी ससंभ्रमस्तयोः समीपे समागतः । तदनन्तरं श्रीदत्ता समुत्थाय श्रेष्ठिने आसनं मुमोच । श्रेष्ठी तत्रोपविश्य कुमारं प्रतीति बभाषे—' हे वीर रात्रौ त्वया कथं व्यसनसागरस्तीर्णः ? '। ततः कुमारेण तस्याग्रे समग्रोऽपि वृत्तान्तो निवेदितः । ततश्च तेन श्रेष्ठिनेति प्रोक्तम्—' हे कुमारेयं प्राणवल्लभा कन्या मया तव दत्ता '। तदा कुमारेणोक्तम्—' अज्ञातकुलस्य मम कन्यां कथं ददासि ? ' श्रेष्ठी प्राह—" तव गुणैः कुलमपि ज्ञातम् । यतः—

आकृतिर्गुणसमृद्धिशंसिनी, नम्रता कुलविशुद्धिसूचिका ।
वाक्क्रमः कथितशास्त्रसंक्रमः, संयमश्च भवतो वयोऽधिकः ॥ १ ॥ "

इत्युक्ते कुमारेण गदितम्—" श्रेष्ठिन् सांप्रतं गरिष्ठकार्यहेतवे मम दूरतरं गन्तव्यं विद्यते । अतः कारणाद्युष्मन्निगदितं कार्यं वलमानः करिष्ये "। इति प्रोक्ते श्रेष्ठिना जल्पितम्—' इदानीं भो इमां परिणय, पश्चाद्यथेच्छं गच्छेः '। तदा तेन कुमारेणेति वचः प्रतिपन्नम् । तदनन्तरं तस्मिन्नेव दिने तां श्रेष्ठिसुतां परिणीयैकां निशां तया सह तत्र स्थित्वा द्वितीये दिवसे प्रया-

समागत्य वल्लभाभिः सह गृहोपरितनभूमौ क्रीडां कर्तुं प्रवृत्तः । एतावता नृपेण स्वमनसि चिन्तितम्—'अस्य सदने कियान् रसवतीपाकः संजायमानोऽस्ति ?' इति विज्ञातुं स्वप्रतीहारस्तस्य सद्मनि भूपतिना प्रेषितः । तदा नृपादेशात्प्रतीहारस्तद्गृहे गत्वा यदा रसवतीपाकादिकं व्यलोकयत्, तदा किमपि न ददर्श । तदा तेन नृपाग्रे समागत्य कथितम्—'स्वामिन् वत्सराजगृहे किमपि भोजनं क्रियमाणं नास्ति' । तदा नृपचित्ते महान् विस्मयोऽभूत् । ततः पुनरप्यपरं कमपि नरं तद्विलोकनाय नृपः समादिदेश । तस्याग्र इति कथितम्—" वत्सराजगृहेऽथवा कस्यापि प्रातिवेश्मिकस्य सदने भोजनसज्जता संपद्यमानास्ति न वा ? भव्ययुक्त्या विलोक्य त्वं समागच्छेः " । इत्युक्ते तेनापि तत्र गत्वा तं समाचारं विलोक्य नृपाग्रे कथयांचक्रे—" स्वामिन् यः स्वगृहे पञ्च सप्त वा जनान् भोजयति तस्यापि सदने कियती सज्जता भवति ? परं त्वस्य वत्सराजस्य गृहे मया तावन्मात्रापि सज्जता न दृष्टा । कोऽपि प्रजल्पन्न विद्यते " । एवमुक्ते राज्ञा चिन्तितम्—" अनेन मम निमंत्रणं दत्तमस्ति, तत्किं घटते ? " । यावता नृप इति विमर्शनां कुर्वन्नस्ति, तावता भोजनावसरे संजाते वत्सराजस्तत्रागत्य भोजनार्थं नृपमाकारयामास । तदा भूपोऽप्येवं बभाषे—" भो वत्सराज किं त्वमस्माभिः सह हास्यं करोषि ? यत्सामग्रीं विनास्मान् गृह आकारयसि ? " । इत्युक्ते वत्सराजः प्राह—' स्वामिंस्त्वं मम सर्वैरपि प्रकारैः पूज्योऽसि । त्वया सह हास्यं कथं करोमि ? ' । तदा राज्ञा निगदितम्—' भोस्त्वद्गृहेऽन्नपाकादिकं किमपि न विद्यते' । इति प्रोक्ते वत्सराजः प्रोचे—" हे देव मद्गृहे रसवती विद्यते वा न विद्यते ? सा भवतां का चिन्ता ? सा चिन्ता ममास्ति । भवद्भिः प्रसादं कृत्वा पादा अवधार्यन्ताम् " । इत्युक्त उत्साहतत्परो राजा समग्रस्वपरिवारसमन्वितस्तद्वेश्मनि यदा गतस्तदा रम्यं मण्डपं निरीक्ष्येति व्यचिन्तयत्—'अस्य चेष्टितमसंभाव्यं दृश्यते। अयं चारुमण्डपोऽधुनैव विनिर्मितः'। तदनन्तरं यथायोग्यं कल्पितेषु रम्यासनेषु

राजंस्तस्या देवताया इमे पुत्र्यौ समर्पय । अनयोस्तत्समीपे स्थितयोः स्वयमेव भर्ता समेष्यति । देवतया क्रियमाणं नरक्षयं विनिवार्य तां श्रेष्ठिसुतामपि वत्सराजः परिणेष्यति "। इत्यादिकं सर्वमपि समाचारं समाख्याय स मुनिरन्यत्र विजहार । अहो सत्पुरुष तेन कारणेन खेचरेन्द्रेणेह समेत्य ते पुत्र्यौ मम समर्पिते । ततः परं सोऽपि खेचरः किंचित्तपः कृत्वा मृत्वा व्यन्तराधिपो जातः । तेन ममाश्वरूपो यक्षः किङ्करो दत्तः । सर्वकामिकः पर्यङ्कोऽपि प्रदत्तः । तथा महौषधीद्वितीयमपि दत्तम् । तत्सर्वमपि भो भद्र मया संतुष्टया तव प्रदत्तम् । तदनन्तरं वत्सराजस्ते द्वे अपि कन्ये परिणीय तत्रैव स्थितस्ताभ्यां समं भोगान् बुभुजे । अन्यदा वत्सराजेन ते रत्नचूडास्वर्णचूडाभिधे द्वे अपि निजे प्रिये स्वकीयं प्रतिज्ञाकारणं ज्ञापिते । ततस्ताभ्यां देवी ज्ञापिता । ततः परं सा व्यन्तरी देवी तत्कारणं विज्ञाय तद्वियोगकातरापि प्रियाद्वयसंयुक्तं तं वत्सराजं विससर्ज । तदनन्तरं स वत्सराजः प्रियाद्वयसमन्वितस्तं पर्यङ्कं समारुह्य व्योममार्गेणैव श्रीदत्ताया निवासमन्दिरे शीघ्रमेव समाययौ । तदानीं सा श्रेष्ठिपुत्री सुप्तोत्थिता सती प्रभातसमये स्ववेश्मोपरितनभूमौ पर्यङ्कं तथा तं तुरङ्गमं विलोक्य सविस्मया सती किमेतदिति दध्यौ—" अयं पर्यङ्कः कुतः समागतः ? अथवायं तुरङ्गमः सप्तभूमिकधवलगृहे कथं चटितः ? "। इति विस्मयं दधाना यावत्सा सम्यग्विलोकयति तावत्कान्ताद्वययुतं शय्यासंस्थितं निजं कान्तं ददर्श । ततश्च सा हर्षप्रकर्षपरिपूरिता सती तातस्य समीपं गत्वा तं प्रतीति समाचारं समाचख्यौ—' आवासस्योपरितनभूमिकायां मत्पतिः समागतोऽस्ति '। तदा ससंभ्रमेण श्रेष्ठिना प्रोचे—' हे वत्से तस्यागमनमित्थं कथं जातम् ? ' । तदा तया शय्यातुरगदर्शनादिकः समग्रोऽपि समाचारो निवेदितः । ततः श्रेष्ठी दत्तोऽपि तं समाचारं समाकर्ण्य सविस्मयः सन् शीघ्रमेव तत्र समाययौ । ततश्च वत्सराजः सप्रियोऽपि तं श्रेष्ठिनं प्रणनाम । तदा श्रेष्ठिना समाचारे पृष्टे सति कुमारः श्रेष्ठिनोऽग्रे समस्तमपि वृत्तान्तं

क्लीबे धैर्यं मद्यपे तत्त्वचिन्ता राजा मित्रं केन दृष्टं श्रुतं वा ॥ १ ॥

पुनर्भवता चिन्ता न विधेया। अस्मत्कथितं श्रूयताम्—सदैवतं तुरंगममारुह्य त्वं तां भीमाटवीं याहि। अस्मान्मातुर्देवतायाः सखी देवतारूपा तत्रास्ति। सेमं तुरंगमं विलोक्य त्वां ज्ञास्यति। ततस्त्वया तस्या अग्रे निगद्यम्। ततः सा देवतापि व्याघ्रीरूपं विधाय त्वत्सार्थं समेष्यति। अतस्तां व्याघ्रीं समानीय नृपस्य समर्पयेः"। इति पत्नीवचः श्रुत्वा क्रमेण तत्र गत्वा तां व्याघ्ररूपिणीं देवतां कर्णे धृत्वा सभायां समानीय नृपं प्रतीत्यूचे—"भो नृपेयं नवप्रसूता व्याघ्री समानीतास्ति। गृह्यताम्, दुह्यताम्, स्वमनीषितं क्रियताम्"। इति निगद्य वत्सराजस्तां कर्णान्मुमोच। तदा सा व्यन्तरी व्याघ्री नृपस्य कुबुद्धिदायकान्मंत्रिणो भक्षयामास। तदा भयभीतः सन्नृपोऽवादीत्—"हं हो वत्सराजेदृशं हिंसाकर्म मा कुरु। इमां पश्चाद्गृहाण। दुग्धेन पर्याप्तम्। एषा मां तथापरमपि जनं भक्षयिष्यति"। यदा राज्ञेति दीनवाक्यमुक्तं तदा वत्सराजेन कर्णे विधृत्य पश्चाद्गृहीत्वा स्वगृहे समानीता। तदा तस्य पत्नीभिः सा देवता भृशं गौरविता। ततः परं क्षणान्तरेण हृष्टा सती सा स्वस्थानं संप्राप्ता।

ततः परं पुनरपि तदीयकान्तासंगमिच्छता नृपेण मंत्रिभिः सममालोच्य वत्सराजं प्रतीति बभाषे—'भो भद्र कुतोऽपि स्थानाज्जलपनीरं समानय। येन मम शरीरं नीरोगं भवति'। इति प्रोक्ते वत्सराजेन पृष्टम्—'तत्पानीयं कुत्रास्ति?' तदा मंत्रिभिः कथितम्—"विन्ध्याटवीमध्ये द्वयोः पर्वतयोरन्तराले कूपोऽस्ति। तदीयं जलं वदति। पुनस्तौ गिरी निरन्तरमेव नयनपुटवत्संगमापगमतत्परौ वर्तेते। तत्र प्रस्तावं विलोक्य लब्धलक्षतया प्रविश्य जलं गृहीत्वा निर्गन्तव्यम्। यदा विलम्बो भवति, तदा गिरिमध्ये समागम्यते। अतः कारणात्त्वया दक्षतया तत्र प्रविश्य निस्सरणीयम्। त्वया विनापरेणेदृशं कार्यं न सेत्स्यति"। इत्युक्ते वत्सराजस्तमप्यादेशमङ्गीकृत्य स्वगृहे समागतः।

वत्सराजवचनान्नृपादय उपविष्टाः । चरणक्षालनादिप्रतिपत्तिर्बभूव । ततः परं स्वर्णरूप्यरत्नमयानि विशालस्थालानि तेषां पुरतो व-
त्सराजमानुषैस्तत्क्षणमेव ढौकितानि । तदनन्तरं मोदकखज्जकशालिदालिघृतादिका मनोज्ञा रसवती परिवेषिता । विचित्रा शाक-
संततिः प्रगुणीकृत्य तत्र समानीता । लपनश्रीघृतपूरपरमान्नगौरसादिसामग्री सज्जिता । राजा रसाढ्यतया भोजनं कुर्वन्नित्थं चि-
न्तयति—" सर्वदैव स्वसदने भोजनं क्रियते । परं त्वीदृशी स्वादिष्टता तत्रापि न भवति । एतद्भोजनं साक्षादमृतप्रायं प्रवर्तते " ।
इति विचिन्तयन् यदा सुस्वादतया मस्तकं धूनयन् भूपतिर्भोजनं कुर्वन्नस्ति, तदा वत्सराजेन चिन्तितम्—' सकलोऽप्येष उत्सवः प्रे-
यसीभिर्विना न शोभते ' । इति विचिन्त्य मन्दिरोपरितनभूमिं गत्वा निजवल्लभानामित्युक्तम्—' हे पत्न्यः प्रकटीभूय नृपतेर्गौरवं कु-
रुत ' । इति स्वामिवचनं समाकर्ण्य ताभिः स्वचित्ते चिन्तितम्—" कुलस्त्रीणां पतिरेव गुरुः पूज्यः
यदुक्तम्—गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः । पतिरेव गुरुः स्त्रीणां सर्वस्याभ्यागतो गुरुः ॥१॥
अतः कारणात्कुलाङ्गनाभिर्यादृशं तादृशं स्वामिवाक्यं प्रमाणमेव कार्यम् " । इति विमृश्य भर्तृवचः प्रतिपन्नम् । परं
तु परस्परं ताभिः कथितम्—" यत्स्वामी भूपतेरस्मान् दर्शयति, तत्र स्वभर्तुः परिणामे हितकरं न भविष्यति । परं किं क्रियते ?
प्रियवचोऽनुल्लंघ्यम् " । इति विचिन्त्य ताभिस्ततोऽपि सारं शृङ्गारं विधाय प्रियस्यादेशं वितन्वन्ति स्म । एतावता नृपोऽपि रत्नचू-
डास्वर्णचूलाश्रीदत्ताभिधानानां तिसृणां वत्सराजपत्नीनां रूपं दृष्ट्वा कामातुरो जातः । तदेति दध्यौ—" अस्मिञ्जगत्ययं वत्सराज
एव धन्यः । यस्यैताः प्रवररूपधारिण्यो विश्वत्रयवर्णनीयास्तिस्रोऽपि प्रिया वर्तन्ते " । इति विचिन्तयन् स राजा भोजनानन्तरं वत्स-
राजेन प्रधानताम्बूलप्रदानवस्त्रार्पणादिना सत्कृतः सन् सपरिकरः स्वगृहे समाययौ परं भूपतिः कामपीडापरिपीडितः संस्तत्प्रियाणां

तदा व्यन्तरेन्द्रोऽपि प्राह—" हे राजन् कृतान्तराजेन समादिष्टमस्ति—मम पार्श्वे निरन्तरं त्वया स्वसेवकाः प्रेषणीयाः । अहं तव मिलनाय समागन्तुमिच्छामि । परं त्विन्द्रादेशो न भवति । यतः क्षणमात्रमपि मां जिनेन्द्रसदने न निर्वहति । अतस्त्वया मम मिलनाय समागम्यम् । नूनं प्रीतिर्गतागतेनैव वर्धते " । इत्युक्ते राजपुरुषास्तत्र गन्तुं समुत्सुका बभूवुः । तदा यमप्रतीहारेण भणितम्—' मया सह समागच्छन्तु ' । तदनन्तरं नृपादयः कीनाशभुवने गन्तुं सोद्यमाः सन्तो जाज्वल्यमानयमगृहसमीपे गताः । तावता यो व्यन्तरेन्द्रो यमप्रतीहारनाम्ना वर्तते, तेनोक्तम्—' मत्पृष्ठे समागन्तव्यमिति ' निगद्य स ज्वलद्गर्तामध्ये प्रविष्टः । तदनु नृपादेशेन चत्वारो मुख्यमन्त्रिणः प्रविष्टाः । ततस्तत्क्षणमेव ते भस्मीभावं प्राप्ताः । तदनन्तरं यावता नरेन्द्रोऽपि तत्र झंपां दातुं समुद्यतस्तावता वत्सराजेन बाहौ धृत्वा निवारितः । ततः परमिति प्रोक्तम्—" हे राजन् सर्वस्यैतद्विदितमेव यज्ज्वलने प्रविष्टो जनस्तत्क्षणमेव मरणमाप्नोति । अहं देवताप्रभावेण जीवितः । तथैव देवतयेमे मम शत्रवो मोहयित्वा निहताः । यत एभिर्मम मारणोपायस्तव निवेदितः । ततोऽमी मया निहताः । यतः

कृते प्रतिकृतं कुर्याल्लुञ्चिते प्रतिलुञ्चितम् । त्वया लुञ्चापिताः पक्षा मया मुण्डापितं शिरः ॥ १ ॥

तथा चोक्तम्—धुत्तह किज्जइ धुत्तई आलह दिज्जिइ आल । मित्तह किज्जइ मित्तई एम गमिज्जइ काल ॥२॥'

इति श्रुत्वा स नृपस्तदीयभक्त्या शक्त्या च सुप्रसन्नः सन् विफलारम्भत्वेन किंचिल्लज्जमानः स्वसदनं गत्वेति चिन्तयति स्म—' अस्य पत्नीरिरंसया मया बहु पापमुपार्जितम् । तथा लोकमध्ये लघुत्वं च प्राप्तम् ' । इति विचिन्त्य श्रीसुन्दरी नाम क-

ततश्च तेन वत्सराजेन सोऽप्यादेशः पत्नीनां निगदितः। तदा पत्नीभ्यां प्रोक्तम्—" हे स्वामिन्नश्वमारुह्य त्वं गच्छ। तत्रास्मदीयसखी शकुनिकारूपधारिणी प्रवरा देवता वर्तते। इत्युक्ते स तदैव तं तुरंगममारुह्य तत्र गतस्तदा शकुनिका तं निरीक्ष्य समुपलक्ष्य तत्कार्यं विज्ञाय देवता तेन जलेन तुंबकानि पूरयित्वा तस्य हस्ते समर्पयामास। ततः स वत्सराजस्तज्जलं समादाय स्वपुरीं समागत्य राजसभायां गत्वा तत्पानीयं नृपस्य यावता प्रदत्तं, तावता देवताप्रभावेण तज्जलं गाढस्वरेणेति प्रोवाच—" हे राजंस्त्वां भक्षयामि, अथवा त्वदीयान्मंत्रिणो भक्षयामि, अथवा तव कुबुद्धिदातारं परं नरं भक्षयामि ? "। इति नीरवचनं श्रुत्वा सर्वोऽपि सभासीनजनो विस्मितः। राजा स्वकार्यसिद्धिमपश्यन्म्लानवदनो जातः। तथापि स राजा वदनविकाशं कृत्वेत्युवाच—' अहो अस्य वत्सराजस्यासाध्यं किमपि नास्ति '। इति निगद्य राज्ञा स विसृष्टः स्वगृहमागतः।

ततश्च राजा पुनरपि मंत्रिभिः समं तस्य विनाशनोपायमालोचयामास। तदा चतुर्भिर्मंत्रिभिस्तं नृपं प्रति प्रोक्तम्—" हे देव श्रीसुन्दरीकन्याविवाहमिषेण दक्षिणस्यां दिशि यमगृहं कारयित्वा यमनिमंत्रणकृते वत्सराजस्तत्र प्रवेश्यते। एतावता सुखेन कार्यं सेत्स्यति "। इत्युपाये निगदिते राजा सहर्षितः संस्तान् सचिवानिति प्रशशंस—' भो भवद्भिः साधु वचनं प्रोक्तम् '। इत्युक्ते तैः कुमंत्रिभिर्दक्षिणस्यां दिशि महतीं गर्तामेकां कारयित्वा इन्धनसमूहैः पूरयित्वाग्निना प्रज्वाल्य राजा ज्ञापितः। तदा नृपेणानेके सुभटा आकारिताः। तथा वत्सराजोऽपि तत्र समाकारितः। पूर्वमपरसुभटानां नामग्रहणपूर्वकं भूभुजेति समाख्यातम्—" भो भटाः श्रीदेवीपुत्रीविवाहोत्सवे यमनिमंत्रणं कृतं विलोक्यते। अनेनाग्निपूरितगर्तामार्गेण भूत्वा तत्र यमसदने गत्वा यमनिमंत्रणं क्रियताम् "। तदाऽपरैः सर्वैरपि जल्पितम्—' स्वामिन्नेतत्कार्यमस्माभिर्न सेत्स्यति '। तैरिति भाषिते राज्ञा वत्सराजस्य प्ररूपि-

क्षणलवतपस्त्यागवैयावृत्त्यसमाधिमान् । अपूर्वज्ञानग्रहणे प्रयतः श्रुतभक्तियुक् ॥ ३ ॥
प्रभावनां प्रवचने विदधाति स्म सर्वथा । सिंहनिष्क्रीडितं नाम तपःकर्म चचार च ॥ ४ ॥

ततः परं मेघरथनामा महर्षिः परिपूर्णं वर्षलक्षं यावत् संयमं प्रतिपाल्यान्तेऽनशनं विधायानुजसहितस्तिलकाचले गत्वा इमं मलमयं देहं त्यक्त्वा समाधिना कालं कृत्वा सर्वार्थसिद्धिसंज्ञके पञ्चमेऽनुत्तरविमाने त्रयस्त्रिंशत्सागरायुः सुरः समभवत् ॥

॥ इति श्रीशान्तिनाथचरित्रे गद्यबन्धे वत्सराजनृपकथासमन्वितो दशमैकादशभववर्णनो नाम पञ्चमः प्रस्तावः ॥

---

## ॥ अथ षष्ठः सर्गः ॥

इतश्चात्रैव भरतक्षेत्रे युगादिजिनपुत्रः कुरुनामा बभूव । तदाख्यया कुरुनामा देशोऽभूत् । तथा च तस्य कुरोस्तनयो हस्ती नामाभवत् । तेनेदं हर्म्यहट्टश्रेणिमनोहरं रम्यतुङ्गप्रासादसन्ततिसुन्दरं प्राकारगोपुरान्वितं हस्तिनागपुरं नाम पुरमपूर्वं निर्ममे । तत्र क्रमेण विश्वसेननामा नृपोऽभूत् । तत्प्रिया पुण्यलावण्यरुचिराऽचिरानाम्नी भुवि विख्याताऽभूत् । तया समं राजा मनोऽभीष्टं सुखं बुभुजे । इतश्चैकदा भाद्रपदमासे कृष्णपक्षे सप्तम्यां तिथौ भरणीगते चन्द्रे सर्वग्रहेषु शुभस्थानस्थितेषु निशान्तरे मेघरथ-

न्या नृपेण तस्य वत्सराजस्य प्रदत्ता । तथा च लोकानुमत्या राज्यमपि स्वकीयं तस्य दत्वा स्वयं तापसो बभूव । तदनन्तरं स वत्सराजो राज्यं प्राप्य बहून् देशान् साधयित्वा पुण्यवान् दृढविक्रमः सन्महाराजपदवीं प्राप्तः ॥

अथैकदा कश्चित्पुमान् वत्सराजनृपतिं प्रणम्य लेखं पुरो मुक्त्वेति विज्ञापयामास—"हे देवाहं क्षितिप्रतिष्ठितपुरात्समागतः । अयं विज्ञप्तिकालेखः पुरवासिभिर्लोकैर्भवतां प्रेषितोऽस्ति" । इत्युक्ते राज्ञा तं लेखं गृहीत्वा स्वपार्श्वस्थस्य लेखवाचकस्य प्रदत्तः । तदा स तं लेखमुन्मुद्य नृपतेः पुरो वाचयामास । तद्यथा—

"स्वस्ति पुर्यामुज्जयिन्यां वत्सराजं महीभुजम् । क्षितिप्रतिष्ठितात्पौरा नत्वा विज्ञपयन्त्यदः ॥ १ ॥
यथा ग्रीष्मार्दितो मेघं शीतार्तोऽग्निं जनः स्मरेत् । पीडिता देवराजेन स्मरामस्त्वां तथा वयम् ॥ २ ॥
शीघ्रमेव समागत्य प्रभुत्वं त्वं कुरुष्व नः । अन्यथान्यं श्रयिष्यामः स्वामिनं न्यायनिष्ठुरम् ॥ ३ ॥"

इति लेखलिखितं समाचारं श्रुत्वा स वत्सराजनृपः सर्वसामग्र्या क्षितिप्रतिष्ठितपुरं प्रति गत्वा देवराजनृपस्य दूतं प्रेषयामास । तदा सोऽपि तं वत्सराजं समागतं ज्ञात्वा संनह्य पुराद्बहिर्निरगात् । परं तत्परीवारोऽपि विरक्तः संस्तं देवराजं नानुगतः । तदा स देवराजोऽपि तं वत्सराजं बलीयांसं मत्वात्मसेवकांस्तथाविधान् विरक्तान्ज्ञात्वा स्वयं प्रणश्य क्वापि गतः । ततः परं सर्वो-

पुरन्दरेणेदृशैरुद्दामवचनैस्तं तीर्थपतिं स्तुत्वा पुनर्जन्मगृहे समानीय मातुः समीपे जिनं विमुच्य सर्वजनसमक्षमित्युक्तम्—“यो जिनस्य वा जिनमातुर्विरूपं चिन्तयिष्यति, तस्य मस्तकं तथा स्फुटिष्यति, यथा ग्रीष्म एरण्डफलं स्फुटति”। इति निगद्य सर्वेऽपि ससुरेन्द्रास्तदनन्तरं नन्दीश्वरे द्वीपे यात्रां कृत्वाऽष्टाह्निकोत्सवं विधाय निजं निजं स्थानं जग्मुः। दिक्कुमार्योऽपि स्व-स्थानं प्रयाताः।

इतश्चाचिरा देवी पाश्चात्यरजन्यां जजागार। तदा तदङ्गप्रतिचारिका निजस्वामिनीं सपुत्रां दृष्ट्वा सहर्षिताः सविस्मयाः सत्य उत्सुकत्वेनाहंपूर्विकया राज्ञे पुत्रजन्म न्यवेदयन्। तथा चेदं कथयामासुः—“हे देवास्य पुत्रस्य सूतिकर्म दिक्कुमारिकाभिः समागत्य दासीभिरिव विहितम्। तथा सुरेन्द्रैर्मेरुमस्तके जन्माभिषेकमहोत्सवोऽस्य स्वामिनश्चक्रे। अस्माभिर्देवमुखादिति श्रुतम्”। इत्युक्ते स श्रीविश्वसेननृपो मेघधाराहतकदम्बवदुच्छ्वसितरोमाञ्चकञ्चुको बभूव। तदा मुकुटं विनापरं स्वाङ्गलग्नं सर्वमपि विभूषणं तासां प्रददौ। तदा सप्तसन्ततिं यावद्भवति तावन्मात्रं कनकरूप्यादि प्रीतिदानं तासां नृपोऽदात्। तदनन्तरं स राजा प्रहृष्टः सन् यो यादृशमर्थयति तस्य तादृशं दानमार्पयत्। लोकानां करं मुमोच। मण्डपिकाद्रव्यमपि मोचयामास। गीतवाद्यधवलमङ्गलवर्धापनादिमहिमानमखिलेऽपि पुरे स क्षितिपः प्रावर्तयत्। एवंप्रकारेण महोत्सवेषु संजायमानेषु द्वादशे दिने संप्राप्ते स क्षितिनायकः स्वकीयं समग्रमपि बन्धुवर्गं गृहे समाकार्य भोजयित्वा तत्समक्षमेवं प्रोवाच “भोः सज्जनाः पूर्वमस्मिन् पुत्रे गर्भागते सति समग्रेऽपि पुरे मरकोपशान्तिर्जाता। ततोऽस्य पुत्रस्य शान्तिरिति नाम प्रदीयते”। इत्युक्ते सर्वस्यापि जनस्यैतन्नामातीवाभिमतं जातम्। तदनन्तरं शक्रेण भगवतः कराङ्गुष्ठे पीयूषं संक्रामितम्। अतः कारणादमृताहारेण स्वामी

जीव आयुषः क्षये सर्वार्थसिद्धितश्च्युत्वा तस्या अचिरादेव्याः कुक्षिसरसि राजहंस इव यदावतारं संप्राप्तस्तदा सा देवी सुखशयनीयसुप्ता ईषज्जागरूका सतीमांश्चतुर्दश महास्वप्नान्निरीक्ष्य जजागार—पूर्वं गजस्ततः परं क्रमेण वृषभसिंहलक्ष्मीस्नात्रपुष्पमालाचन्द्रसूर्यध्वजपूर्णकुम्भसरोवरसागरविमानरत्नसञ्चयनिर्धूमवह्नीनां दर्शनं जातम् । ततः सा राज्ञी प्रमोदभरनिर्भरा सती निद्रां परित्यज्य नृपसमीपे गत्वा जयविजयेन नृपतिं वर्धाप्य भर्तुरादेशेन सुखासनं प्राप्य तत्रोपविश्य यथाक्रमेण समग्रानपि स्वप्नान् प्रियतमाग्रे समाचख्यौ । अथ तत्समाकर्ण्य राजा विश्वसेनः प्रमोदभरभासुरः प्रोवाच—“ हे प्रिये त्वयेमे प्रधानाः स्वप्ना दृष्टाः । एतत्प्रभावेण सर्वलक्षणसंपूर्णः सर्वाङ्गसुन्दरस्तव पुत्रो भविष्यति” । तदनन्तरं सा नृपप्रिया महर्षिता सती तं स्वप्नविचारं श्रुत्वा कुस्वप्नभयेन देवगुरुधर्मचिन्तया जागरूका सती तां रात्रिं व्यतिचक्राम । ततश्च प्रभाते जाते जगतीपतिः स्वकीयान् भृत्यान् प्रेष्याष्टाङ्गनिमित्तपण्डितान् स्वप्नविचारकान् प्रवरद्विजान् समाकारयति स्म । ततस्ते द्विजा राजपुरुषैः समाहूताः सन्तो मङ्गलोपचारान् कृत्वा नृपसभायां समागत्य क्रमन्यस्तेषु भद्रासनेषूपविष्टाः । तदा राज्ञा तान् पुष्पादिभिः समभ्यर्च्य तेषां पार्श्वे स्वप्नविचारः पृष्टः । तदा तैरित्युक्तम्—“ भो नृपतेऽस्मच्छास्त्रे द्विचत्वारिंशत्सामान्यस्वप्नाः प्रोक्ताः सन्ति । त्रिंशन्महास्वप्नाः समाख्याताः प्रवर्तन्ते । सर्वाङ्केन द्विसप्ततिस्वप्ना विद्यन्ते । त्रिंशन्मध्य इमे चतुर्दश महास्वप्ना अचिरादेव्या दृष्टाः । यतः श्रीमदर्हतां चक्रिणां च मातर एतांश्चतुर्दश महास्वप्नान् पश्यन्ति । वासुदेवमातरस्तन्मध्ये सप्त स्वप्नान् पश्यन्ति । बलदेवमातरस्तन्मध्ये स्वप्नचतुष्टयं पश्यन्ति । प्रतिवासुदेवमातरस्तेषां मध्ये स्वप्नत्रयं पश्यन्ति । माण्डलिकमातरस्तेषां मध्यादेकं महास्वप्नं विलोकयन्ति । परं त्वचिरादेव्येमे चतुर्दश महास्वप्नाः समालोकिताः । ततः षट्खण्डभरतस्वामी तव पुत्रो भावी । अथवा त्रैलोक्यवन्दितः श्रीजिनो भविष्यति ” । इति

समुदायः । द्वितीये निधौ सर्वेषां धान्यबीजानामुत्पत्तिः । तृतीये निधौ नराणां स्त्रीणां हस्तिनां तुरङ्गमाणामाभरणसमुदायः । चतुर्थे निधौ चतुर्दशापि रत्नानि समुत्पद्यन्ते । पञ्चमे निधौ वस्त्राणां तथा रङ्गादीनां संभवः । षष्ठे कालनिधौ कालत्रयवर्तमानं ज्ञानं प्रवर्तते । सप्तमे महाकालनिधौ स्वर्णरूप्यलोहमणिप्रवालानां संभवः । अष्टमे माणवकाभिधे निधौ समग्रापि युद्धनीतिः समग्राणि प्रहरणानि सुभटयोग्यकवचादिसमुदायसंभवः । नवमे शंखनिधौ समस्तानि तुर्याङ्गानि तथा चतुर्विधकाव्यनाट्यनाटकयोर्विधिर्विद्यते । तेषां निधानानामधिष्ठायका निगद्यन्ते—तेषु निधिषु पल्योपमायुष्का निधानसदृशनामानः कुलदेवताः सिद्धान्तोक्ता विज्ञेयाः । ततः परं गंगायाः पूर्वनिष्कुटं तथैव स्ववशे चक्रे । एवं जगतीपतिः षट्खण्डभरतं साधयित्वा सर्वं दिग्विजयं कृत्वा पुनः स्वकीयं हस्तिनापुरं प्रविश्य महामहोत्सवपूर्वकं स्वगेहे स प्रभुर्यावता समाजगाम, तावता द्वात्रिंशत्सहस्रमुकुटबद्धमहीपालैर्द्वादशः वार्षिकश्चक्रवर्तित्वपट्टाभिषेकमहोत्सवः प्रारब्धः । ततः परं द्वादशभिर्वर्षैस्तं महोत्सवं परिपूर्णं विधायैकैको राजा दिने दिने तस्मै स्वामिने प्रचुरं द्रव्यं तथा द्वे द्वे कन्ये ददौ । ततस्तस्य विभोश्चतुःषष्टिसहस्राणि रूपलावण्यशालिन्यः सुरांगनासमानाः प्रिया बभूवुः । तथा सेनानीप्रभृतीनि चतुर्दश रत्नान्येकैकयक्षसहस्रेण प्रत्येकमधिष्ठितानि तस्य संजज्ञिरे । तथा चतुरशीतिलक्षाणि करिणो वाजिनस्तथा ध्वजाङ्किताः शस्त्रसंपूर्णा रथा अस्य चक्रिणोऽभवन् । तथा द्विसप्ततिसहस्राणि महर्द्धिकपुराणि तथा ग्रामपदात्यो षण्णवतिकोट्योऽभवन् । द्वात्रिंशत्सहस्रप्रमिता देशा भूपाश्च तद्वशे संजाताः । तथा च द्वात्रिंशद्बद्धतरुणीनाटकानां तथा रत्नखानिप्रभृत्याकराणां चतुर्विंशतिसहस्राणि तस्य संपद्यन्ते स्म । अष्टचत्वारिंशत्सहस्रप्रमितानि पत्तनानि तस्य बभूवुः । एवंविधां महर्द्ध्या सह तस्य स्वामिनश्चक्रिपदवीं पालयतः पञ्चविंशतिवर्षसहस्राणि ययुः ॥

रूपलावण्यसंपन्नः क्रमाद्वृद्धिं प्राप्तः ।

इतश्च तस्य स्वामिनः शरीरे लक्षणानि प्रोच्यन्ते—

पाणिपादतले यस्य रक्ते लक्षणलक्षिते । स्निग्धताम्रपृथूत्तुङ्गा नखाश्च मुकुरोपमाः ॥ १ ॥
पादौ कूर्मोन्नतावेणीजंघाकारे च जंघिके । ऊरू करिकरप्रख्ये विस्तीर्णं च कटीतटम् ॥ २ ॥
गंभीरदक्षिणावर्ता नाभिर्मध्यं च वज्रवत् । पुरद्वारकपाटाभं दृढं वक्षःस्थलं तथा ॥ ३ ॥
बाहू पुरार्गलातुल्यौ ग्रीवा कम्बुसमा वरा । बिम्बोपमौ चाधरोष्ठौ कुन्दकुड्मलवद्द्विजाः ॥ ४ ॥
उत्तुङ्गः सरलो नासावंशः सज्जनवृत्तवत् । पद्मपत्रोपमे नेत्रे अष्टमीन्दुसमालिकम् ॥ ५ ॥
दोलाकारं श्रुतियुगं छत्राकारं च मस्तकम् । स्निग्धा अलिकुलश्यामाः कुन्तलाश्चातिकोमलाः ॥ ६ ॥
पद्मगन्धसमश्वासो वरहेमरुचिस्तनुः । इत्यङ्गलक्षणं तस्य वराङ्गस्य तथा परम् ॥ ७ ॥

इत्यादिलक्षणैर्युक्तः स भगवान् ज्ञानत्रयसमाश्रितोऽशेषज्ञानविज्ञानपरिगतः सर्वोत्कृष्टः सन् क्रमेण यौवनं प्राप । तदा जनकेनानेकाः सुरूपाः कुलबालिकाः स श्री शान्तिकुमारः परिणायितः । परं तु तस्य सर्वान्तःपुरप्रवरा स्नेहसारा एका यशोमती नाम राज्ञी बभूव । ततः पञ्चविंशतिवर्षसहस्रेष्वतिक्रान्तेषु पित्रा स स्वामी राज्ये निवेशितः ॥

मांसपेशीरसास्वादलुब्धः कैवर्तवश्यताम् । यात्यगाधजलस्थोऽपि मीनो रसनया जितः ॥ ३ ॥
भृङ्गः करिमदाघ्राणलुब्धः प्राप्नोति पञ्चताम् । दुःखं वा सहते नागो घ्राणेन्द्रियवशः खलु ॥४॥
हस्तिनीवपुषः स्पर्शलुब्धोऽथ करिपुङ्गवः । आलानबन्धनं तीक्ष्णांकुशघातं सहेत भोः ॥ ५ ॥
त्यजन्ति विषयानेवंविधान् सत्पुरुषाः क्षणात् । त्यक्ताः प्रियास्वरूपेण गुणधर्मेण ते यथा ॥६॥"

इत्युक्ते स चक्रायुधो भक्तिनम्रः सन् स्वामिनं प्रतीति बभाषे " भगवन् कोऽसौ गुणधर्मः ? कथं तेन विषयाः परित्यक्ताः ? तत्कथां समादिशतु "। इति पृष्टे श्रीजिनाधीशः प्राह—

## ॥ अथ गुणधर्मकथा ॥

इहैव भरतक्षेत्रे शौर्यपुराभिधं पुरं वर्तते । तत्र भूप्रसिद्धो दृढधर्मनामा नृप आसीत् । तस्य प्रिया यथार्थनामा शीलशालिनी बभूव । तत्कुक्षिसंभवो गुणधर्मनामा पुत्रोऽभवत् । स क्रमेण शैशवमतिक्रान्तः सन् कलाभ्यासतत्परो बभूव । कियता कालेन महान् द्वासप्ततिकलाकलापविचक्षणोऽभूत् । रूपलावण्यगुणेन जगदानन्ददायको जातः । स एवंविधो विद्यते—

सुभगः सरलः शूरोऽपूर्वभाषी प्रियंवदः । दृढसौहृदः सुरूपः स सर्वगुणसंयुतः ॥ १ ॥

अत्रान्तरे पञ्चमे ब्रह्मदेवलोकेऽरिष्टप्रतरवासिनां सारस्वतादीनां लौकान्तिकदेवानामासनप्रकंपो जातः । तदा तैर्ज्ञानेन प्रभोर्दीक्षासमयं विज्ञाय मनुष्यलोके समागत्य बन्दिजनवज्जयजयशब्दं प्रयुज्येति समाख्यातम्—'हे प्रभो बुध्यस्व, धर्मतीर्थं प्रवर्तय'। इत्युक्ते प्रभुणापि ज्ञानेन दीक्षासमयं विज्ञाय तद्वाक्यश्रवणेन च स्वेच्छया याचकानां सांवत्सरं दानं दत्वा तथा चक्रायुधनामानं स्वकीयं पुत्रं राज्ये निवेश्य स भगवान् यदा दीक्षाग्रहणाय समुत्सुको बभूव तदा सर्वेऽपि सुराधीशा आसनप्रकंपे संजाते सति श्रीशान्तिजिनस्य दीक्षाकल्याणके समाजग्मुः । एतावता स स्वामी चामरैर्वीज्यमानः शिरसि धृतातपत्रो यदा सर्वार्थशिबिकामारुरोह, तदा सा शिबिका पूर्वं मानुषैरुत्पाटिता । तदनन्तरं सुरासुरेन्द्रगरुडनागेन्द्रैः सा जगद्गुरुशिबिकोढा । तदानीमेषा शिबिका पुरोऽग्रे देवैरूढा, दक्षिणाग्रेऽसुरैरूढा, पश्चाद्भागे गरुडैरुत्तरतो नागैरूढा । तथा भगवतः पुरो विभागे नटा नाट्यं प्रकटयन्ति स्म । मागधा जयजयारवं चक्रुः । केचिन्नरा ऐश्वर्यादिकान् सद्गुणाननेकच्छन्दै रासकबन्धैर्वर्णयन्ति स्म । ततः केचिन्मृदङ्गभंभादीनि वाद्यान्येकस्वरेण वादयन्ति स्म । तथा हाहाहूहूभ्यां देवगन्धर्वाभ्यां सप्तस्वरग्रामसंमूर्छनालयमात्रासमन्वितं प्रवरं गीतगानं चक्रे । रंभातिलोत्तमोर्वशीमेनकासुकेशकाः प्रभोः पुरतो हावभावविलासमनोहरं नृत्यं विदधुः । यदुक्तम्—

**हावो अङ्गविकारः स्याद्भावश्चित्तसमुद्भवः । विलासो नेत्रजो ज्ञेयो विभ्रमो भ्रूसमुद्भवः ॥ १ ॥**

तदानीं स स्वामी एवंविधसामग्र्या मन्दं मन्दं नगरान्निर्गत्य सहस्राम्रवणाभिधे महोद्याने गत्वा शिबिकायाः समुत्तीर्य विभूषणानि विमुच्य पञ्चभिर्मुष्टिभिः कूर्चेन सह शिरसि यदा लोचं विदधे, तदा देवेन्द्रस्तांश्चिकुरान् वस्त्राञ्चले समादाय महा-

अथ गुणधर्मकुमारस्तद्वाक्यं निशम्य प्रातःकृत्यं विधाय सपरिच्छदोऽपि भैरवाचार्यसमीपे ययौ। तावता कुमारेण तं योगिनं व्याघ्रचर्मनिषण्णं विलोक्य स्वकीयं मस्तकं भूमौ लगयित्वा यावता भक्तिपूर्वकं वन्दितस्तावता स योगीन्द्रः ससंभ्रमः सन् स्वकीयमासनं दर्शयित्वा कुमारं प्रतीति बभाषे—'त्वमप्यत्रैवोपविश'। इति प्रोक्तेऽपि कुमारो विनीतः संस्तं प्राह—'हे भगवन् मम गुरोः सममासने कदाप्युपवेष्टुं न युक्तम्'। इति निगद्य स्वसेवकोत्तरीयवस्त्र उपविश्य स कुमारः प्रोवाच—हे प्रभो त्वयास्मिन् पुरे स्वयं समभ्येत्याहं कृतार्थो विहितः'। इत्युक्ते योगीन्द्रः स्माह—"भोः कुमार त्वं सर्वथा मम मान्योऽसि, परं शृणु—अहं निष्किंचनोस्मि, तेन तव स्वागतं किं करोमि?"। योगिनेति प्रोक्ते पुनः कुमारो जगाद—"हे पूज्य भवादृशामाशीर्वाद एवास्माकं स्वागतक्रिया तथा युष्मद्दर्शनेनैव सर्वाभीष्टार्थसिद्धिर्जाता"। इति समाख्याते पुनरपि योगीन्द्र आचख्यौ—"भोःकुमार त्वया प्रोक्तं तद्युक्तमेव परं लोकोक्तिरीदृशी विद्यते। यतः—

**भक्तिः प्रेमप्रियालापः सन्मानं विनयस्तथा। प्रदानेन विना लोके सर्वमेतन्न शोभते ॥ १ ॥"**

एवमुक्ते भूयः कुमारो बभाषे—"भवदीयमस्मादृशामेतद्दानं, यत्सम्यग्दृष्ट्या विलोकनम्। तथा यत्सम्यगादेशप्रदानम्"। इत्युक्ते पुनर्योगी गदति स्म—"भोः कुमार मत्समीपे मंत्र एकः प्रवरोस्ति। अष्ट वर्षाणि मया तस्य जापपरिश्रमो विहितः। अथ यदि त्वमेकां रजनीं विघ्नप्रतिघातं करोषि, तर्ह्ययं तस्य सर्वोऽपि प्रयासः सफलो भवेत्"। इति निगदिते कुमारोऽवादीत्—'हे प्रभो कथ्यतां, तन्मया कस्मिन् दिने कार्यम्?'। इति पृष्टे स योग्याख्यत्—"भोः कुमार कृष्णचतुर्दश्यां रात्रौ स्मशानभूमिकायां

इतश्च वसन्तपुरपत्तन ईशानचन्द्रनृपस्य रूपसंयुता कनकवती नाम सुता बभूव। तत्कृते तेन नृपेण स्वयंवरमण्डपश्चक्रे। तदा तत्र स्वयंवरमण्डपे स गुणधर्मकुमार आययौ। तथाऽन्येऽपि राजानः समागताः। तदा नृपदत्तगृहेषु स्थिताः। एकदा स गुणधर्मकुमारः स्वयंवरणमण्डपं विलोकयितुं ययौ। तदा सापि नृपात्मजा कनकवती तत्रागात्। तया स कुमारो निरीक्षितः। ततस्तेन गुणधर्मकुमारेण सा राजपुत्री विलोकिता। तदा दृष्टिविक्षेपेण सात्मन्यनुरागवती विज्ञाता। ततः परं सा सानन्ददृष्ट्या विलोकयन्ती स्वसदनं ययौ। कुमारोऽपि सपरिच्छदः स्वकीयावासे समागतः। ततश्च तया स्वगृहे गत्वा कुमारसमीप एका चेटी प्रेषिता। तया तस्मै कुमाराय चित्रपट्टिका समर्पिता। तदा कुमारस्तस्यां पट्टिकायामेकां राजहंसीं लिखितां ददर्श। तदध एवंविधं श्लोकमेकं लिखितं विलोक्य वाचयामास—

"आदौ दृष्टे प्रिये सानुरागासौ कलहंसिका। पुनस्तद्दर्शनं शीघ्रं वाञ्छत्येव वराक्यहो॥ १॥"

ततः कुमारोऽपि तस्यां पट्टिकायां राजहंसरूपं लिखित्वा तदध इति श्लोकं लिखति स्म—

"कलहंसोऽप्यसौ सुभ्रु क्षणं दृष्टानुरागवान्। पुनरेव प्रियां द्रष्टुमहो वाञ्छत्यनारतम्॥ २॥"

इति लिखित्वा सा चित्रपट्टिका चेटीहस्ते पश्चात्प्रेषिता। ततः कुमार्या तस्या हस्ते ताम्बूलविलेपनसुगन्धकुसुमानि तस्मै कुमाराय ढौकितानि। तदा कुमारेण तानि पुष्पाणि शिरसि निक्षिप्तानि। ताम्बूलमास्वादितम्। विलेपनं शरीरे न्यस्तम्। ततः कुमारेण तस्यै चेटिकायै परितुष्टेन निर्मलो हारः प्रदत्तः। तदा तया प्रोक्तम्— 'हे कुमार कन्यायाः सन्देशवाक्यं शृणु'।

इत्युक्ते कुमारोऽवादीत्—'हे प्रिये तव किङ्किणीमाला क्व पतिता ?' । इति पृष्टा सा प्राह—'हे स्वामिन् स्थानं सम्यङ्न जानामि'। तयेति भाषिते नृपात्मज उवाच—"प्रियेऽयं मम सुहृन्महानैमित्तिको वर्तते। निमित्तज्ञानेन सर्वमपि जानाति । तवापि किङ्किणीमालापातस्थानं कथयिष्यति"।इत्युक्ते सा तत्पार्श्वे प्रश्नमकरोत्। तदा तेनोक्तम्—'विलोक्य कथयिष्यामि'। इति निगदिते गुणधर्मकुमारः क्षणं तत्र स्थित्वा विनोदवान् क्रीडां विधाय मित्रेण सह समुत्थाय स्वस्थानं ययौ। तदनन्तरं द्वितीये दिने निशासमये यदा कनकवती विमानमारुह्य तत्र स्थाने गन्तुं लग्ना तदा कौतुकात् कुमारोऽप्यदृश्यरूपः सार्थे स्थितस्तत्र गतः। तदनन्तरं पुनरपि विद्याधरेन्द्रादेशेन कनकवत्या नृत्यमारब्धं तदा समीपस्थेनादृश्यरूपेण कुमारेण कमप्युपायं कृत्वा तस्याश्चरणान्नूपुरं गृहीतम्। परं तु तया तदा न ज्ञातम् । पश्चाद्बहुधा विलोकितं पुनर्न लब्धम् । ततः परं सा स्वगेहं समागता । कुमारोऽपि समागतः । ततः प्रभातसमये जाते गुणधर्मकुमारस्तन्नूपुरं मित्रहस्ते समर्प्य स्वयं मित्रेण समन्वितोऽपि तस्याः सदने समागात् । तदा तयाऽभ्युत्थानादिकं विधायासनं मण्डितम् । तत्र स नृपात्मजः समासीनः। क्षणमात्रं नृपपुत्रेण सह तया शास्त्रगोष्ठीं विधाय ततः स मतिसागरः पृष्टः—'भो भद्र तन्निमित्तं वद, यन्मया कल्ये पृष्टमभूत्'। इत्युक्ते स प्रोवाच—"भो भद्रेऽहं निमित्तबलेनेत्थं जानामि, तवान्यदपि किञ्चिद्भूषणं गतमस्ति"। ततः सा शंकितचित्ता सती एवं जगाद—"भो निमित्तज्ञ तत्किं विभूषणं गतमस्ति ? यदि जानासि तर्हि कथय"। इति निगदिते भर्त्रा प्रोक्तम्—'हे प्रिये किं त्वं न जानासि ?'। तदा तया कथितम्—'अहं जानामि, परं तत्पातस्थानं न स्मरामि'। तदा कुमारः प्राह—"अन्येन केनचिन्ममाग्र इति निवेदितम्—यद्दूरंगतायास्तव पत्न्या अहो नूपुरं पतितम्। इत्युक्ते येन नूपुरं गृहीतमभूत्तत्पार्श्वान्मया बलात्कारेण तद्गृहीतम्"। इति प्रजल्पिते कनकवती स्वचित्त एवं दध्यौ—"केनापि प्रयोगेण नूनं भर्त्रा मम वृत्तान्तो विज्ञातः यतः—

खड्गमादायैकाकिनैव त्वया समागन्तव्यम् । अहं तत्रात्मचतुर्थः स्थास्यामि "। इत्युक्ते कुमार एवमस्त्विति निगद्य स्वगृहं ययौ। तदनन्तरं चतुर्दश्यां यामिन्यामेकाकी कृपाणपाणिस्तत्र समाययौ । तदा योगिना भाषितम्—" भोः कुमारात्र रात्रौ विभीषिका भविष्यन्ति । ततस्त्वयाहं रक्षणीयः । तथा चैत उत्तरसाधका रक्षणीयाः "। इति निगदिते कुमारेणोक्तम्—" भो योगीन्द्र त्वं स्वस्थः सन्मंत्रसाधनं कुरु। मयि रक्षके सति तव विघ्नं कर्तुं कः समर्थो भवति ?' । इत्युदिते योगिना तत्र मण्डलं कृत्वैकं शवं संस्थापितम् । तन्मुखे वैश्वानरं प्रज्वाल्य तत्र होमविधिश्चक्रे । एतावता तस्मिन् योगीन्द्रे होमं प्रकुर्वति सर्वदिग्मण्डलव्यापी गगनभेदको विश्वं बाधिरीकुर्वन्महानिर्घातो बभव । तदा तत्र पृथ्वी द्विधा जाता । तेन रन्ध्रेणैको भीषणः कालकरालरूपो नरः पातालात्प्रकटीभूयैवं बभाषे—" रे पापिष्ठ दिव्यकान्ताभिलाषुक त्वया किमत्र मेघनादनामाहं क्षेत्रपालो न विज्ञातः ? यत्त्वं मम पूजामकृत्वा मंत्रसिद्धिं समीहसे ? तथैष राजकुमारः सरलाशयस्त्वया विप्रतारितोऽस्ति " । इत्युक्त्वा स क्षेत्राधिपस्तज्जिघांसया सिंहनादं विदधे । तदा ते त्रयोऽपि योगीन्द्रशिष्या भूमौ निपतिताः । तदा कुमारेण तं क्षेत्राधिपं प्रतीत्युक्तम्—' भोस्त्वं किं वृथा गर्जसि, चेत्तव शक्तिरस्ति, तन्मया सह युद्धं कुरु' । इति प्रणिगद्य तं निरायुधं दृष्ट्वा कुमारेण स्वकरात्खड्गं मुमुचे । तदनन्तरं प्रचण्डभुजदण्डाभ्यां तौ युद्धं कर्तुं लग्नौ । अथ युध्यमानः स क्षेत्रपालस्तेन बलवता कुमारेण क्षणात् बाहुबलेन यदा समाक्रान्तस्तदासौ क्षेत्राधिपस्तुष्टो बभाषे—" हे महानुभाव त्वयाहं जितः । इतस्त्वत्साहसेन तुष्टोऽस्मि । किञ्चिद्वाञ्छितं याचस्व, यत्तव संपादयामि "। तदा कुमारस्तं स्वभुजग्रहाद्विमुच्यैवं जगाद—' यदि त्वं तुष्टोऽसि, तदस्य योगिनः समीहितं विधेहि ' । इत्युक्ते क्षेत्राधिपेनोक्तम्—" अस्य यथेप्सितफलदायको महान्मंत्रस्त्वत्प्रभावेण सिद्ध एव । परं किमपि स्ववाञ्छितं प्रार्थय, यथा तत्पूरयामि । यतो देवदर्शनं निष्फलं न

म्नाहं पुत्री वर्ते। अस्य भयेन मया विवाहोऽपि न विहितोऽस्ति ” तदा पुनः कुमारः प्राह—‘ भयं कीदृशमभूत् ? स्नेहजं वा कोपजं वा ? ’ इति पृष्टे तया जगदे—“ कोपजमेव स्नेहजं कुतो भवति ? । यतः पुरानेन दुष्टात्मनाहं मन्दिरस्य कुट्टिमतलादपहृता । ततश्च रसनाच्छेदं कुर्वतानेन मां प्रतीति गदितम्—‘ मद्वचनं विना त्वया भर्ता नाङ्गीकर्तव्यः । तथात्र मम समीपे यामिन्यां त्वया निरन्तरमेव समागतव्यम् । तव सुशीलायाः सदैव विमानं ममाज्ञया भविष्यति । यद्येवं करोषि, तर्हि त्वां मुञ्चामि, न हन्मि’ इत्युक्ते जीवितलोभेन मया शपथपूर्वं तत्प्रतिपन्नम् । अनेन नृत्यकला मम शिक्षिता । एवंप्रकारेणानेन विद्याधरेणान्यास्तिस्रोऽपि नृपात्मजा वशे कृताः सन्ति । परं त्वयैनं खेचरं निघ्नता सर्वासां सुखं विहितम् ” । इति श्रुत्वा कुमारेण ताः सर्वा अपि स्वस्थानं प्रेषिताः । ततः स कुमारोऽपि चेट्या सह विमानमारुह्य स्वप्रियासदनं समियाय । तदा कनकवत्या तं कुमारं दृष्ट्वा स्वदासी पृष्टा—‘ हलेऽद्य किं मम कान्तेन स दुष्टखेचरो हतः ? ’ । ततः सा तं वृत्तान्तं समग्रमपि स्वामिन्या अग्रे समाचख्यौ । तदानीं सा कनकवती स्वभर्तृपौरुषोत्कर्षमाकर्ण्य भृशं प्रमुदिता । अथ गुणधर्मकुमारस्तया सह वार्तां कृत्वा तत्रैव स्नेहनिर्भरः शर्वरीप्रान्तं यावत्सुप्तः । एतावता तस्य विद्याधरस्य लघुभ्रात्रा कोपाक्रान्तचित्तेन निद्रामध्ये समुत्पाट्य स गुणधर्मकुमारो महार्णवे निक्षिप्तः । तत्प्रिया चान्यत्र मुक्ता । तदा स कुमारो दैवयोगेन समुद्रमध्ये फलहकं प्राप्य सप्तरात्रेण पयोधेस्तटे प्राप्तः । तत्र चैकं तापसं ददर्श । तदनन्तरं स तेन तापसेन सह तापसाश्रमं ययौ । तदा कनकतीं स्वां प्रियां पश्यति स्म । एतावता स कुमारः कुलपतिं प्रणम्य तत्समीपे यदा समुपविष्टस्तदा तेन पृष्टम् ‘हे भद्र किमेषा तव भार्या ? ’ । इत्युक्ते स एवमेवेत्युवाच । ततश्च पुनरपि कुलपतिना गदितम्—“ भोः शृणु, इतो दिनाद्व्यतीते तृतीये दिनेऽहं वनान्तरे गतस्तावता मयैवं बाला त्वद्वियोगेन तरुशाखायामात्मान-

द्यौरजडं कला चान्द्री चौरिका कीर्त्तितानि च । प्रकटानि तृतीयेऽह्नि स्युश्छन्नं सुकृतानि च॥१॥"

इति विचिन्त्य पुनस्तया प्रोक्तम्—स्वामिंस्तन्नूपुरं मामकीनं क्व विद्यते ? '। तदा कुमारमित्रेण कुमारादेशात्तन्नूपुरं तस्याः प्रदत्तम् । ततश्च पुनरपि सा जगाद—'हे प्रिय सत्यं कथय । इदं मञ्जीरं त्वया क्व प्राप्तम् ? '। तदा तेनोक्तम्—' त्वया क्व पातितम् ? '। इत्युक्ते तया पृष्टम्—' यत्र स्थान इदं पतितमभूत्तत्स्थानं भवता दृष्टं न वा? '। तदा तेन भर्त्रा पुनरपि कोऽपि प्रत्युत्तरः कृतः । तदा तया समाख्यातम्—" हे कान्त यदि त्वया तत्स्थानं दृष्टं भवति, तद्वरम् । अन्यथा मम वह्निप्रवेशेऽपि न शुद्धिर्भविष्यति "। सा कनकवत्येवमुक्त्वा वामकरे ग्रीवां विन्यस्य चिन्तां प्रपन्ना सती क्षणादधोमुखी बभूव । ततः पुनः कुमारोऽपि हास्यवार्तया तां हासयित्वा निजगृहे गतः । ततश्च पुनरपि स कुमारो रात्रौ तथैव यावत्तत्र समागतः, अत्रान्तरे तत्सख्या तां प्रतीति भणितम्—' हे स्वामिनि तत्र गमने वेलाऽतिक्रामति । पश्चाद्विद्याधरो रोषं विधास्यति । इत्युक्ते तया दीर्घं निःश्वस्येति प्रोक्तम् —" हे सख्येतद्विषमं कार्यमहं मन्दभाग्या किं करोमि ? । यतः कुमारीत्वे पितृगेहे स्थिताहं तेन विद्याधरेणामुं शपथं कारितास्मि—ममानुज्ञां विना त्वया कान्तो न सेवनीयः । निशायां विमानमारुह्य मम समीपे निरन्तरमेव त्वया समागन्तव्यमिति भाषितेऽपि मया पित्रोराग्रहेण तथा चास्यानुरागेणायं राजपुत्रः परिणीतः । स ममाभीष्टः, तस्याहं वल्लभास्मि । परमद्य केनापि प्रकारेण तत्र गच्छन्ती तेनाहं ज्ञाता । सोऽपि विद्याधरोऽनेन साक्षाद्दृष्टः । ततः कारणात्स खेचरो मम प्राणवल्लभं हनिष्यति । अथवा खेचरो मां हनिष्यति । इत्याशङ्का मम चित्ते विद्यते । तेनाहं सखि चिन्तां प्रपन्नास्मि । तथा च—

शान्तौ सुशीलौ स्वल्पकषायौ सरलाशयौ मैत्रीभावयुतौ सन्तौ सार्थे व्यवसायं चक्रतुः यत्किञ्चिदेकः कार्यं करोति, तद्द्वितीयोऽपि करोति । तयोर्द्वयोरिति निश्चयो वर्तते । एकदा तावुभावप्युद्याने गतौ । तत्र ताभ्यां सभामध्ये धर्मं भाषमाणं वज्रगुप्ताभिधं मुनिं दृष्ट्वा तं च शुभभावेन नमस्कृत्य तत्समीपे धर्मं श्रुत्वा संजातवैराग्यत्वेन तत्पार्श्वे साधुधर्मं प्रतिपद्य प्रान्ते संलेखनां कृत्वा विपद्य त्रिदिवं प्राप्तौ । तत्रापि तौ परस्परं प्रीतिशालिनौ बभूवतुः । एकदा ताभ्यां स्वर्गसंस्थिताभ्यामिति संकेतः कृतः—" आवयोर्मध्याद्यः स्वर्गतः पूर्वं च्यवते, स परेण त्रिदिवस्थितेन सर्वदा धर्मे संस्थाप्यः ॥

इतश्च कियता कालेन समृद्धदत्तजीवः स्वर्गाच्च्युत्वा भरतक्षेत्रे धरानिवासे पुरे सागरदत्तस्य व्यवहारिणो गृहे भार्याधनदत्तायाः कुक्षौ नागदेवतादत्तवरेण पुत्रत्वेनावतीर्णः । परिपूर्णसमये जातः । तस्य नागदत्त इति नाम पितृभ्यां प्रदत्तम् । क्रमेण द्वासप्ततिकलासु स विशारदोऽभूत् । गान्धर्वकलायां विशेषेण निरतः । तेन जनमध्ये तस्य नागदत्तस्य गान्धर्व इत्याख्या प्रवर्तिता । वीणावादनेऽतिदक्षस्तथा गारुडविद्यया संयुक्तः स एकदा पुरोद्याने मित्रपरिवृतः क्रीडां करोति स्म । एतावता वसुदत्तजीवेन त्रिदिवस्थितेन तं धर्मप्रमादिनं ज्ञात्वा पूर्वभवकृतसंकेतवशाद्बहुधा प्रतिबोधितः । परं स प्रतिबोधं न प्राप्नोति । तदा सुरेण चिन्तितम्—" अयमत्यन्तसुखितः सन् धर्मं न करिष्यति यावता प्राणसंशयकारिणि कष्टे न पतिष्यति " । इति विचिन्त्य तेन गीर्वाणेन मुखवस्त्रिकाधर्मध्वजसहितं करधृतसर्पकरण्डकमीदृशं मुनिरूपं कृत्वा यत्र नागदत्तः क्रीडन्नस्ति तत्राययौ । तदा नागदत्तेन तं निकटमार्गे गच्छन्तं दृष्ट्वा तत्समीप इति पृष्टम्—' भो गारुडिकैतेषु त्वत्करण्डकेषु किं विद्यते ? ' । तदा तेनोक्तम्—' विषधराः सन्ति ' । इत्युक्ते तेन गदितम्—" तर्हि तान् सर्पान् प्रकटीकुरु । अहं तव सर्पान् क्रीडयिष्यामि । त्वं मदीयान् क्रीडय " । इत्युक्ते व्रतधारी व-

मुद्बध्य मरणाय समुद्यता दृष्टा । तदा पाशं छित्त्वा मरणादहं महता कष्टेनेमामरक्षम् । ततश्च ज्ञानबलेन त्वदागतिं विज्ञाय कथयित्वेयं तोषिता ” । तेन तापसेनेत्युक्ते तौ दम्पती एकत्र संभूय कदल्यादितरुफलैः प्राणवृत्तिं विधाय रात्रौ क्वापि निरंजने लतागृहे यावता सुषुपतुस्तावता पुनरपि तेन खेचरेण तावुत्पाट्य महोदधौ निक्षिप्तौ । तत्रापि पूर्वकृतकर्मयोगात् फलहकं प्राप्य तौ द्वावपि तीरमासाद्य तत्रैव मिलितौ । तदा कुमारः प्राह—“ अहो एतानि को विजानाति ?—

स्त्रीचरित्रं प्रेमगतिं मेघोत्थानं नरेन्द्रचित्तं च । विषमविधिविलसितानि च को वा शक्नोति विज्ञातुम् ॥ १ ॥

नूनं विधिविलसितान्येवंविधानि भवन्ति । अथवा विषयासक्तचित्तानां विपदो दुर्लभा न ” । पुनश्चिन्तयामास—“ अहो महानुभावजीवा अनेनैव विरागेण समग्रमपि परिग्रहं परित्यज्य निर्ममतया निर्मलं तपः कुर्वन्ति ” । यावत्स गुणधर्मकुमारः स्वचित्त एवं चिन्तयामास, तावता कनकवती प्रोवाच—“ हे स्वामिन् सति पौरुषे त्वं कथं विषादं करोषि ? अद्यापि त्वं निरामयोऽक्षताङ्गो वर्तसे । यतः—

“दीनोद्धारो न विदधे नैकच्छत्रा कृता मही । विषया नोपभुक्ताश्च प्रकामं खिद्यतेऽथ किम् ॥ १ ॥”

इति वार्तां कुर्वतोस्तयोर्यद्यपि रात्रिर्जातास्ति तथापि स कुमारो नारीवचनानि शृण्वन् स्वचित्ते वैराग्यं ध्यायन् जागर्ति । एतावता पुनरपि स खेचरो यावदागात्तावता कुमारेण निर्जितः । परं जीवन्मुक्तः । ततश्च प्रभातसमये स कुमारः कुलपतिमनुज्ञाप्य क्वापि पत्तने जगाम । तत्र बाह्योद्याने गुणरत्नमहोदधिं सूरिं विलोक्य नत्वा स सकलत्रोऽपि मोहनिद्रानिवारिणीं धर्मदेशनां

## ॥ अथ यमपाशमातङ्गकथा ॥

एकस्मिन् पुरे यमपाशनामा तलारो बभूव । स जात्या चाण्डालोऽस्ति परं तु कर्मणा न । तथा तत्रैव नगरे दयादिगुणसंयुतो नन्ददामनामा वणिग्वरोऽभूत् । सुमित्रा नाम तदीया गेहिनी समभूत् । तत्कुक्षिसंभवो मम्मणनामा सुतोऽभूत् । एकदा तत्पुरस्वामी नृपतिर्वणिजानीततुरङ्गमपरीक्षार्थं तत्पृष्ठे यावता समारूढस्तावता केनापि नृपवैरिणा सुरेण स तुरङ्गमोऽधिष्ठितः । तदा स तुरङ्गो व्योम्न्युत्पत्य वेगेन दूरस्थवनमध्ये गतः । तदा राज्ञैकाकिना निरञ्जनं वनं विलोक्य संभ्रान्तचित्तेन यदा साऽश्वः करान्मुक्तस्तदा स भूमौ पतितः पञ्चत्वं प्राप्तः । तस्मिन् समये तत्र नृपसमीप एको मृगः समागतः । स च नृपं दृष्ट्वा जातिस्मरणेन पूर्वभवं विज्ञाय भूमावक्षराणि लिखित्वा भूपस्येति ज्ञापयामास "—हे राजन् पूर्वभवेऽहं देवलो नाम तव श्रीकरीधरोऽभूवम् । अवसानकाल आर्तध्यानेन मृत्वा तिर्यग्योनिमध्ये मृगो जातः" । स एवंप्रकारेण निजस्वरूपं विज्ञाप्य तृषाक्रान्तस्य नृपतेरग्रे भूत्वा जलाशयं दर्शयामास । तदा राजा तत्र गत्वा जलं पीत्वा मुखं प्रक्षाल्य यावता स्वस्थो जातस्तावता नृपसैन्यं पृष्ठे समागतम् । तदनन्तरं स भूमिपतिस्तेन सैन्येन सह तं जीवितदायकं मृगं सार्धं नीत्वा स्वपुरं समाययौ । तदनन्तरं नृपप्रसादेन स मृगः पुरमध्ये चतुष्पथादिप्रदेशे स्वेच्छया परिभ्रमति । परं तु वचनेनापि कोऽपि न पीडयति । यदि कदाचित् किमपि स विनाशं करोति, तथापि तस्य मृगस्य नृपभयेन कोऽपि किमपि न कथयति । एकदा स मम्मणस्य हट्टे समागत्य यावता परिभ्रमणं कर्तुं लग्नस्तावत्पूर्वभवमत्सरतः स मम्मणस्तस्मिन्मृगे भृशं कुपितः सन् पितरं प्रतीति प्रोचे—'हे तातायं विनाशकारको मृगो मया हन्तव्यः' । इत्युक्ते जनकोऽवादीत्—"हे पुत्र वणिक्कुलेऽपरोऽपि जीवो न हन्यते, अयं तु मृगो भूपतेर्मान्योऽस्ति, त्वया विशेषतो न हन्त-

जापे—" भोस्त्वयेदृशी वार्तापि न कार्या। इमे मदीया महोरगा देवानामपि दुर्ग्राह्याः। रे मूर्ख त्वं बालरूपो मंत्रौषधिबलं विनेमान् कथं क्रीडयसि?"। इति निगदिते नागदत्तोऽवादीत्—" इमान् सर्पान्मया गृह्यमाणांस्त्वं विलोकयेः। परं त्वादौ मदीयान्नागांस्त्वं गृहाण"। इति जल्पिते तेनोक्तम्—' मुञ्च'। तदा नागदत्तेन स्वकीयाः सर्पा मुक्ताः परं तस्य शरीरे ते न लग्नाः। कदाचिल्लगन्ति तथापि दैवतशक्तित्वाद्व्यथां न कुर्वन्ति। तदनन्तरं नागदत्तः समत्सरो जजल्प—" रे गारुडिक त्वमपि सर्वान्सर्पान् त्वत्समीपस्थान्मुञ्च। कथं विलम्बं करोषि?"। तदा दैवतरूपेण प्रोक्तम्—" सर्वान् त्वत्स्वजनान्मेलय, नृपं साक्षिकं कुरु, यथाहं सर्पान्मुञ्चामि। अन्यथा न"। इति प्रजल्पिते तेन तथा कृतम्। तदा व्रती गारुडिको गाढस्वरेणेति जजल्प—" भो जनाः सावधानचित्ता मद्वचनं शृणुत—अयं नागदत्तगन्धर्वो मदीयैः सर्पैः सह क्रीडितुमिच्छति। परं यद्यसौ तैर्विषधरैर्दश्यते, तर्हि सर्वथा मम दोषो न देयः"। इत्युक्ते स नागदत्तः स्वजनैर्वारितोऽपि यदा न विरराम, तदा स गारुडिकः स्वकरण्डकस्थितान् सर्पान् परितो मुक्त्वेति जजल्प—" एते मम पन्नगा महाक्रूराः सन्ति। अमीषां नागानां स्वरूपं युष्माकमग्रे कथयामि। श्रूयताम्

आरक्तनयनः क्रूरो द्विजिह्वो विषपूरितः। क्रोधाभिधानः पूर्वस्यामादिमोऽयं सरीसृपः॥ १ ॥

अयमष्टफणाटोपभीषणः स्तब्धवर्ष्मकः। याम्यायां यमसंकाशो मानो नाम महोरगः॥ २॥

वञ्चनाकुशला वक्रगमना पश्चिमाश्रिता। इयं मायाह्वया नागी धर्तुं केनेह शक्यते॥ ३॥

इति चिन्तयन् स्वगृहं गतः । इतश्च दुष्टबुद्धिनामा वणिग्निजगृहं गत्वा कूटरचनातत्परः सन्नेकान्ते जनकनामानं स्वकीयजनकं प्रतीति प्रोवाच—" हे तात मद्वाक्यं श्रूयताम्—यतो दीनाराः समस्ता अपि मम हस्ते चटिताः सन्ति । परं रात्रौ यथा कोऽपि न ज्ञास्यति, तथाहं त्वां तत्र नीत्वा तस्मिन्नेव वटकोटरे क्षेप्स्यामि । प्रभाते त्वया तत्र संस्थितेन समग्रजनसमक्षमिति वाच्यं—सुबुद्धिना दुष्टबुद्धिं वञ्चयित्वा वित्तं गृहीतमस्ति " । इत्युक्ते पित्रा निगदितम्—' रे पुत्र नैतत्सुन्दरम् । परं त्वदाग्रहेण मया विधातव्यम् ' । इति प्रोक्ते तेन दुष्टबुद्धिना प्रच्छन्नतया रात्रिमध्य एव पितरं वटकोटरे निक्षिप्य प्रातः नृपपौरसमक्षं तं वटतरुं कुसुमचन्दनादिना समभ्यर्च्येति निगदितम्—" भो वटवृक्ष ! सत्यं वद, तद्वित्तं केन गृहीतम् ? अयं विवादस्त्वयि तिष्ठते । यतः—

सत्येन धार्यते पृथ्वी सत्येन तपते रविः । सत्येन वायवो वान्ति सर्वं सत्ये प्रतिष्ठितम् ॥ १ ॥ "

इत्युदिते वटकोटरमध्यस्थः स जनकश्रेष्ठी प्राह—' भो जनाः शृण्वन्तु—सुबुद्धिना लोभाक्रान्ततया तद्वित्तं गृहीतमस्ति ' । इति निशम्य सर्वोऽपि जनो विस्मयं प्राप्तः । तदा नृपेण सुबुद्धिं प्रति निगदितम्—' चोरस्त्वमपराधी धनापहारकर्तातः कारणान्निधानं मम समर्पय ' । इति नृपवाक्यं श्रुत्वा तेन सुबुद्धिना स्वमनसि चिन्तितम्—" अचेतनास्तरवो न क्वापि जल्पन्ति परं त्वेषा दुष्टबुद्धेः काचित्कूटरचना घटते । संकेतं कृत्वा कोऽपि वटमध्ये निक्षिप्तो भविष्यति । अन्यथा न्यग्रोधतो वाक्यं कथं निःसरति ? " । इति विचिन्त्य तेन नृपतिं प्रति बभाषे—" भो राजन्मया निश्चयेन तव धनं समर्पणीयम् । परं किमपि विज्ञप्यमस्ति " । इत्युदिते नृपतिना गदितम्—' भोः कथं न विज्ञपयसि ? ' । इति नृपतिवचनं समाकर्ण्य स्वबुद्ध्या सुबुद्धिरुवाच—" स्वामिन्मया लोभान्धेन मित्रं वञ्चयित्वा धनं गृहीतम् । परं तत्रैव वटे निक्षिप्तमभूत् । एकदाहं तद्धनं गृहीतुं यावदुपागतस्तावत्तत्रैकं फटाटोपभ-

व्यः ”। एवंप्रकारेण पित्रा निवारितः। परं तेन प्रस्तावं प्राप्य रोषवशात्स मृगो निहत एव। तदा स मम्मण ईदृशं पापकर्म कुर्वन् जनकेन दृष्टः, तथा दूरस्थितेन यमदण्डेनापि दृष्टः। तदनन्तरं तेन तत्स्वरूपं नृपाग्रे कथितम्। इत्युक्ते राज्ञा पृष्टम्—‘ भो यमदण्डात्रार्थे कोऽपि साक्षी वर्तते ? ’। तदा तेनोक्तम्—‘ अस्य पिता साक्षी ’। तदा स श्रेष्ठी नृपेणाहूय पृष्टः। तदा तेन सत्यमेव निगदितम्। ततः स श्रेष्ठी सत्यवादित्वान्नृपेणापि सत्कृतः। अथ महीभुजा मम्मणस्य वधाय यमपाशः समादिष्टः। तदा यमपाशेन नृपं प्रति प्रोक्तम्—‘ हे देवाहं जीवहिंसां न करोमि ’। इत्युक्ते राज्ञा पृष्टम्—‘ भोस्त्वं जात्या मातङ्गो वर्तसे। जीवहिंसां कथं न करोषि ? ’। इति पृष्टे स कारणं समाचख्यौ—“ राजन् श्रूयताम्—हस्तिशीर्षपुरे दवदन्तो नाम वणिक्पुत्र आसीत्। एकदा स श्रीअनन्ततीर्थकृत्पार्श्वे धर्मं श्रुत्वा वैराग्यं प्राप्य व्रतं जग्राह। तदनन्तरं तस्य मुनेस्तीव्रं तपस्तपतोऽनेकशो लब्धयः समुत्पन्नाः। ततश्च स महर्षिर्गीतार्थः सन्नेकाकी विहारं कुर्वन्नेतस्यां नगर्यां समागत्य स्मशानभूमिसमीपे कायोत्सर्गं विधाय निश्चलचित्तस्तस्थौ। इतश्च मम पुत्रोऽतिमुक्तकनामा विद्यते। स उपसर्गरोगेण पीडितः पितृवनोपान्ते गत्वा सद्भक्त्या मुनिं ननाम। तदा तत्प्रभावेण मम सुतो निरामयो जातः। तदनन्तरं तेन पुत्रेण गृहमागत्य स वृत्तान्तो ममाग्रे निवेदितः। ततः परं सकुटुम्बोऽप्यहं रोगाक्रान्तस्तत्रागत्य मुनिं ननाम। तावता सकुटुम्बोऽप्यहं नीरुग्बभूव। तदनन्तरं मया श्रावकधर्मः प्रतिपन्नः। यावज्जीवं हिंसाया विरतोऽस्मि। हे राजंस्तेनैव साधुना स्वकीया प्रतिबोधकथा ममाग्रे निवेदिता। तेन कारणेनाहं तत्स्वरूपं जानामि ”। ततः संतुष्टेन राज्ञा यमपाशं संपूज्य सत्कृत्य समस्तमातङ्गानां स्वामी कृतः। अपरेणान्त्यजेन नृपादेशं प्राप्य स मम्मणो व्यापादितः। ततः परं यमपाशो निजायुः क्षये मृत्वा त्रिदशो जातः॥

गच्छन्ती वसुदत्तनाम्ना पुरारक्षकेण दृष्टा । तदा स रागपरवशः सन् तस्याः पितृसमीपे समेत्य पाणिग्रहणार्थं तां कन्यां याचितवान् । तदा तेन कन्यापित्रा प्रजल्पितम्—" भो एषा मया जिनदासश्रेष्ठिसुतस्य जिनदत्तस्य प्रदत्तास्ति, तदन्यथा कर्तुं न शक्यते । यतः—

सकृज्जल्पन्ति राजानः सकृज्जल्पन्ति पण्डिताः । सकृत्कन्याः प्रदीयन्ते त्रीण्येतानि सकृत् सकृत् ॥१॥"

इत्युक्ते स दुष्टात्मा स्वचित्ते रुष्टो जिनदत्तोपरि विनाशबुद्धिं चिन्तयन् दिवानिशं छलान्वेषणं करोति । एवं जाते एकदा नृपतिस्तुरङ्गमवाहिकां कर्तुं पुरोद्याने गतोऽभूत् । तत्र वेगेन तुरङ्गमक्रीडां कुर्वतस्तस्य नृपस्य कर्णाद्रत्नसहस्त्या प्रवरकुण्डलं पपात । परं तु राज्ञा गृहमागतेन तत्पतितं ज्ञातम् । ततः परं तद्विलोकनाय राज्ञा वसुदत्तनामा आरक्षकः समादिष्टः । इतश्च स नृपादेशं प्राप्य कुण्डलविलोकनाय यावत्प्रचलितस्तावता तेनारक्षकेणात्मनोऽग्रे तस्मिन्नेव मार्गे केनापि कार्येण जिनदत्तनामा व्यवहारी गच्छन् दृष्टः । तदा तेन व्यवहारिणा मार्गे गच्छता तत्र कुण्डलं पतितं विलोक्य तन्मार्गं परित्यज्येति कारणाद्दूरे भूत्वा गतः । इतीति किम् ? यदुक्तं शास्त्रे—

आत्मवत्सर्वभूतानि परद्रव्याणि लोष्ठवत् । मातृवत्परदारांश्च यः पश्यति स पश्यति ॥ १ ॥

एतावता वसुदत्तोऽपि पृष्ठस्थस्तत्र गत्वा कर्णाभरणं पतितं विलोक्य शीघ्रमेव तद्गृहीत्वा नृपसमीपे समागत्य तद्भूपाय समर्पितम् । तदा महर्षितवदनो राजा प्रोवाच—' भो भद्र त्वयेदं कर्णाभरणं क्व लब्धम् ? ' । तदा तेन दुष्टधिया द्वेषभा-

यङ्कुरं महोरगं दृष्ट्वेति चिन्तयितुं लग्नः—'अहो एतद्द्रविणं देवताधिष्ठितं बभूव'। इति विचिन्त्याहं पश्चाद्वलित्वा गृहं गतः। अथ यदि नृपादेशो भवति, तर्हि केनाप्युपायेन वित्ताधिष्ठायकं सदर्पं सर्पं हन्मि"। एवं सत्यसदृशे वाक्ये निगदिते सति राज्ञा प्रोक्तम्—'भोः स्वसमीहितं कुरु'। इत्याकर्ण्य सुबुद्धिश्रेष्ठिना तत्क्षणमेव सर्वजनसमक्षं छगणकान्यादाय तरुकोटरं तैः परिपूर्य तथा बाह्येऽपि तं वटं परितश्छगणकानि विरचय्य यावदग्निं ज्वालयितुमारब्धस्तावता छगणोद्भवेन प्रचुरधूमेन व्याकुलीभूतो दुष्टबुद्धिजनको जन्ननामा तत्क्षणमेव भूमौ पपात। तावता नृपेण लोकैरपि दृष्ट उपलक्षितश्च। तदा सकौतुकैः सर्वैरपि जनैः पृष्टम्—'भोः किमेतत्?'। तावता तेन दुष्टबुद्धिपित्रा कथितम्—"भो नरेश्वरानेन दुरात्मना कुपुत्रेण दुष्टबुद्धिनाहं कूटसाक्षी कारितः। अलीकवाक्यजं पापं ममेहैव फलितम्। इति ज्ञात्वा केनाप्यलीकं न वक्तव्यम्"। इत्युक्त्वा यावत्स्थितस्तावता राज्ञा सर्वस्वमादाय दुष्टबुद्धिनामा तत्सुतः स्वदेशान्निर्वासितः। तथा च सुबुद्धिर्वस्त्रालङ्करणादिभिस्तेन भूभुजा सत्कृत्य सत्यवादित्वात्सर्वलोकेऽपि प्रशस्यतां प्रापितः। इति ज्ञात्वेह लोके परलोकेऽपि हितकारकं सत्यमेव वाच्यम्। असत्यं परिहर्तव्यमेव॥

॥ इत्यसत्यविषये भद्रश्रेष्ठिकथानकम् ॥ २ ॥

अथ स्थूलादत्तपरित्यागसंज्ञकं तृतीयमणुव्रतं जिनदत्तवत्प्रतिपालनीयम्"। श्रीशान्तिजिनेनेत्यादिष्टे चक्रायुधनृपेण विज्ञप्तम्—'स्वामिन् कोऽसौ जिनदत्तः? कथं तेन तृतीयं व्रतं प्रतिपालितम्?'। इति पृष्टे प्रभुः प्राह—"भो भद्र शृणु—

दिकर्मनिपुणो रूपयौवनविभववान् करालपिङ्गलनामा पुरोहितोऽभूत् । तथा तस्मिन्नेव पुरे पुष्पदेवाभिधानो महान् व्यवहारी वर्तते । तस्य पुरोहितस्य तेन व्यवहारिणा समं मैत्री विद्यते । तस्य महेभ्यस्य प्रिया पद्मश्रीनाम्नी प्रकृष्टरूपवती पतिव्रतादिप्रवरगुणोपेतास्ति । यदुक्तम्—

पतिव्रतानां नारीणां भर्तुस्तुष्यन्ति देवताः । गङ्गा यथान्त्यजस्यापि स्वयं हि श्रीफलं ललौ ॥ १ ॥

एकदा पुरोहितेन केनापि हितकर्मणा नृपस्तोषितः । तदा तेन राज्ञा तस्मै पुरोधसे वरप्रदानं दत्तम्—'भोः पुरोहित समीहितं याचस्व' । भूभुजेत्युक्ते विषयासक्तचित्तेन पुरोहितेन प्रोक्तम्"—हे स्वामिन् यदि याचितं ददासि, तर्ह्यस्मिन्नगरे मया परस्त्रियः स्वेच्छया भोक्तव्याः । कोऽप्यपराधो न विधेयः" । इति प्रोक्ते नृपो बभाषे—"भोः पुरोहित या नारी त्वां वाञ्छति सा सेवनीया । पुनरपरा न सेवनीया । यदि बलात्कारेणानिच्छन्तीमपि रामां रंस्यसि वा प्रार्थयिष्यसि, तर्हि तव पारदारिकवद्दण्डं करिष्यामि" ? इत्युक्ते तेन पुरोधसा तत्प्रतिपन्नम् । ततः परं निरर्गलः सन् स्वेच्छया पुरमध्ये स्त्रीलोलुपतया परिभ्रमणं करोति । एवं कुर्वता तेन कामान्धेन द्विजन्मनैकदा पुष्पदेवपत्नी पद्मश्रीर्दृष्टा । तदा रागान्धतयोपायांश्चिन्तयितुं लग्नः—'केन प्रकारेणैषा पुष्पदेवपत्नी मम वश्या भवति ?' । इति विचिन्तयन् स पुरोधास्तस्या एव पुष्पदेवपत्न्या दासीं विद्युल्लताभिधानां प्रतीति बभाषे—'भद्रे तथा कुरु, यथा तव स्वामिनी मां समीहते' । इत्युक्ते तया कदाचिन्निजस्वामिन्या अग्रे पुरोहितवाक्यं निगदितम् । तया शुद्धशीलवत्या तद्वाक्यं न प्रतिपन्नम् । तदा तया दास्या पुरोहिताग्रे प्रोक्तम्—'मम स्वामिनी त्वदीयं वचनं नाङ्गीकरोति' । इति श्रुत्वा तेन दुरात्मनैकवेलं क्वाप्यवसरं प्राप्य स्वयमेव सा पद्मश्रीः स्वेच्छया क्रीडितुं प्रार्थिता ।

वतो नृपाग्र इत्युक्तम्—'हे स्वामिन्मया जिनदत्तात्प्राप्तम्'। इत्युक्ते नृपः प्राह—"भो जिनदत्तः किं परद्रव्यं गृह्णाति ? स धर्मवान् विचारवान् श्रूयते। यो धर्मवान् भवति, तस्य पूर्वाचार्यैरित्युक्तमस्ति। यतः—

पतितं विस्मृतं नष्टं स्थितं स्थापितमाहितम्। अदत्तं नाददीत स्वं परकीयं क्वचित्सुधीः" ॥ १ ॥

इति निगदिते पुनर्वसुदत्तो वदति स्म—"राजन् जिनदत्तसदृशः कोऽप्यपरस्तस्करो नास्ति। अपरे चौरा अदृष्टतया परार्थं हरन्ति, अयं तु पश्यतामेव वित्तापहारी वर्तते"। इत्युक्ते क्रुद्धेन राज्ञा चिन्तितम्—"असौ साधुः श्रूयते, परं तु साधुसदृशो न। यो दुष्कर्मकारी स नृपाणां वध्य एव"। इति विचिन्त्य भूपेन वसुदचारक्षकस्य समादिष्टम्—'भोः स जिनदत्तो विडम्बनां विधाय वध्यः'। इत्यादिष्टे स प्रमुदितः संस्तत्क्षणमेव तं जिनदत्तं गृहीत्वा रासभे चटाप्य रक्तचन्दनेन वपुर्विलिप्य काहलाद्यनिष्टवाद्यैर्वाद्यमानैः पुरीमध्ये त्रिकचतुष्कचत्वरेषु भ्राम्यमाणः स्थाने स्थाने जनसमूहैर्हाहारवं कुर्वाणैर्यावता राजमार्गे नीतस्तावता कोलाहलं श्रुत्वा समीपस्थगृहान्निर्गत्य तया जिनमत्या स व्यवहारी विडम्ब्यमानो दृष्टः। तदा तया रुदनं कुर्वन्त्या स्वचित इति चिन्तितम्—"अयं जिनदत्तो धर्मार्थी दयावान् श्रीमद्देवगुरुभक्तितत्परो निरपराधः कीदृशीं कष्टदशां प्राप्तोऽस्ति ?"। एतावता जिनदत्तोऽपि तां विलोकयन्तीं दृष्ट्वा स्नेहपरः सन् स्वचेतसीति चिन्तयति स्म—"अहो एतस्याः कीदृश्यकृत्रिमा प्रीतिर्मयि वर्तते ?। मद्व्यसनं समालोक्य क्षणादेव या दुःखभागिनी बभूव। अतः कारणादत्रसमाद्व्यसनान्मोक्षो मम भविष्यति, तर्हि कियन्तं कालमनया सह भोगान् भोक्ष्ये। अन्यथा सागारमनशनं मम भवतु"। इति विचिन्तयन् स दुष्टाशयैस्तलारक्षपुरुषैर्वध्यस्थानं समानीतः। एतावता प्रियमित्रस्य पुत्री जिनमती हस्तचरणं प्रक्षाल्य गृहचैत्यानामग्रे निश्चयं विधाय शासनदेवतां हृदये विचिन्त्य

द्वारेषु च्छिद्रस्य विलोकनानि, कन्याविवाहे करपीडनानि ॥ १ ॥

तत्र च श्रीमान्न्यायधर्मतत्परोऽमरसेनाभिधानो नृप आसीत्। तस्मिन्नगरे रूपचन्द्राख्यो विवेकवान् श्रेष्ठी बभूव। स च विशेषतः सम्यक्त्वधारकः श्रीजैनधर्मप्रतिपालकः। तदीया भार्या जिनदेवी सापि सुश्राविका। तत्कुक्षिसंभवः सुलसनामा पुत्रोऽभूत्। स संप्राप्तयौवनः सन् पितृभ्यां जिनदासश्रेष्ठिपुत्रीं सुभद्रां परिणायितः। एकदा स सुलसः पितुरादेशाद्गुरोः समीपं गत्वैकादश श्राद्धव्रतानि जग्राह। एकं परिग्रहप्रमाणं न गृहीतवान्। ततः परं स सुलसः कलाकलापरसिकतया विषयविनोदेषु स्वकीयं चित्तं न करोति। तदा श्रेष्ठिन्या पुत्रं धर्मतत्परं शास्त्रार्थसादरं दृष्ट्वा श्रेष्ठिनं प्रतीति बभाषे—"हे स्वामिन्नात्मीयस्तनयो निःस्पृहसदृशो दृश्यते। नाथ तं तथा कुरु, यथा स विषयवाञ्छां करोति"। इत्युक्ते श्रेष्ठी प्राह—"प्रिये एवं मा वद। अनादिकालाभ्यासेन प्राणी कामव्यापारेषु स्वयमेव प्रवर्तते। परं धर्मकर्मव्यापारो दुष्करः"। इति प्रोक्तेऽपि तस्या महाग्रहेण श्रेष्ठिना निजनन्दनो नटविटद्यूतकाराणां समीपे चातुर्यहेतवे मुक्तः। ततस्तेन क्रमेण समग्रोऽपि कलाभ्यासो विस्मारितः। यदुक्तम्—

व्यसनिन इव विद्या क्षीयते पङ्कजश्री—र्गुणिन इव कुदेशे दैन्यमायान्ति भृङ्गाः।
कुनृपतिरिव लोकं पीडयत्यन्धकारं, धनमिव कृपणस्य व्यर्थतामेति चक्षुः ॥ १ ॥

तेषां सङ्गतया हास्यकौतुकशृङ्गारकथाश्रवणनाट्यप्रेक्षणद्यूतक्रीडादितत्परः सन् क्रमात्तत्सङ्गतिवशादेकदा कामपताका-

तदा तया पुरोहितं प्रत्युक्तम्—' एवं मा वादीः । कदाचिच्चव सखा ज्ञास्यति ' । तदा तेन पुरोधसा ज्ञातम्—' एषा मयि स्नेहवती विद्यते ' । तदा पुनरपि परिहासेनोक्तम्—' तथा कुरु भद्रे, यथा तव भर्ता क्वाप्यन्यत्र देशान्तरे याति ' । इति पुरोहितवाक्यं समाकर्ण्य तया सर्वमपि स्वकान्तस्य कथितम् । तदा तेन पुष्पदेवेन तद्वचनं श्रुत्वा स्वचित्ते रक्षितम् । न क्वापि प्रकटीकृतम् । परंतु स वणिक् स्वमनसि चिन्तयति—' विलोक्यते, पुरोहितः किं करोति ? ' एतावत्येकस्मिन्नवसरे तेन पुरोधसा विद्याबलेन नृपशीर्षे दुःसहा शिरोर्तिपीडा कृता । तदानीं शिरोर्तिपीडितेन राज्ञा पुरोहितं समाहूय तं प्रत्युक्तम्—" भोः शिरोर्तिवेदनया मम प्राणा अपि गमिष्यन्ति । कमपि मंत्रतंत्रादिकमुपायं विधाय शिरःपीडां निवारय " । इत्युक्ते पुरोधसा तत्क्षणमेव स्वयं विरचिता शिरोर्तिर्मत्रोपायेनापनिन्ये । तदा समाधितत्परः सन् पुनरपि राजा पुरोधसं प्रति तुष्टो बभाषे—' भोः पूज्यप्रवर किञ्चित्समीहितं प्रार्थय ' । इत्युक्ते पुरोधाः प्राह—" राजन् भवत्प्रसादेन सर्वमपि परिपूर्णमस्ति । परं नरेश्वर ! मदीयं मनोरथमेकं पूरय । यत् किंजल्पसंज्ञके द्वीपे किंजल्पकाः पक्षिणः सन्ति । ते सुस्वराः सुन्दराकाराः सुखदा भवन्ति । तेषामानयनार्थं पुष्पदेवनामानं वणिग्वरं प्रेषय " । इत्युक्ते भूपेन पुष्पदेवं समाकार्य बभाषे—' अहो किंजल्पद्वीपतः किंजल्पपक्षिणः समानय ' । इति राज्ञा निगदिते एतावता तेन ध्यातम्—' एतत्सर्वं पुरोहितविचेष्टितम् ' । इति विज्ञाय तेन पुष्पदेवेन नृपं प्रतीत्यं बभाषे—'नृपादेशः प्रमाणमेव ' । इत्युक्त्वा स व्यवहारी स्वसदनं गत्वा निजगृहेऽपूर्वभूमिगृहमेकं कारयित्वा तदुपरि यंत्रपर्यङ्कं कारयांचक्रे । ततश्च स्वकीयप्रत्ययितनराणामिति शिक्षा दत्ता—" यद्यत्र करालपिङ्गलनामा पुरोहितः समेति, तर्हि यंत्रशय्यायामुपवेश्य भूमिगृहे पातयित्वा प्रच्छन्नमेव भवद्भिर्मत्समीपे समानेतव्यः " । ईदृशमादेशं स्वसेवकानां दत्वा स पुष्पदेवः स्वगृहान्निःसृत्य देशान्तरगमनाय पुराद्बहिः

णमारुह्य चटितस्तावताऽभाग्ययोगेन जलधिमध्ये यानभङ्गो बभूव । सर्वमपि धनं गतम् । सुलसो, दैववशात् फलहकं प्राप्य तद्भुजसा परिरभ्य पञ्चभिर्दिवसैः क्वापि समुद्रतीरे गतः । तत्र घनानि कदलीवनानि दृष्ट्वा पेशलैः कदलीफलैः प्राणवृत्तिं विधाय क्वचित्तटे नीरमालोक्य तृषानिवारणाय तत्पीत्वा स्वस्थीभूय स्वचित्त इति व्यचिन्तयत्—" मया कियती ऋद्धिः समुपार्जिताभूत् । परं त्वद्य छिन्नहस्ताद्विचरणमात्रो जातः । परिधानमपि न स्थितम् । अहो एतत्पापफलं ज्ञेयम् । अथवा दैवचेष्टेदृशी बभूव । यदुक्तम्—

दैवमुल्लंघ्य यत्कार्यं क्रियते फलवन्न तत् । सरोऽम्भश्चातकेनात्तं गलरन्ध्रेण निःसृतम् ॥ १ ॥

एवं सत्यपि मया साहसं न परित्याज्यम् । पुरुषकारो मया विपत्स्वपि न त्याज्यः । शास्त्रज्ञा ईदृशं वचनं वदन्ति—

नीचैर्नारभ्यते कार्यं कर्तुं विघ्नभयात् खलु । प्रारभ्य त्यज्यते मध्यैः किञ्चिद्विघ्न उपस्थिते ॥१॥

उत्तमास्त्वन्तरायेषु भवत्स्वपि सहस्रशः । प्रशस्यं कार्यमारब्धं न त्यजन्ति कथंचन ॥ २ ॥

एवं विचिन्त्य सुलसो यावदग्रतो गन्तुं प्रवृत्तस्तावदेकत्र गृध्रपक्षिणां समूहं दृष्ट्वा तदनुसारेण तत्र गत्वा यदा विलोकयति स्म, तदा तत्र शवमेकं पतितं ददर्श । तदीयवस्त्रप्रान्ते कोटिमूल्यानि पञ्च रत्नानि निरीक्ष्येति दध्यौ—" मयादत्तादानविरतिः कृतास्ति । परमिदं निःस्वामिकं धनं गृहीतं भव्यम् । एतन्मूल्येन चैत्यानि कारयिष्ये रत्नस्वामिनः पुण्यार्थमिति" विचिन्त्य तानि र-

वेश्यागृहे स ययौ । तदा तया गणिकया सविस्मयचित्तयाऽभ्युत्थानासनादिप्रतिपत्तिस्तं धनाढ्यं मत्वा विदधे । स सुलसो मित्राणामुपदेशेनोपविष्टः । गणिकया गोष्ठी समारब्धा । तावता तदीयवचनैस्तमनुरक्तं विज्ञाय सर्वाण्यपि मित्राणि स्वं स्वं स्थानं जग्मुः । क्रमेण तया पण्याङ्गनया स तथा रञ्जितः, यथा तद्गृहान्न निर्गतः। पैतृके धने तत्रस्थो विलसति । एवं षोडश वर्षाणि तत्र स्थितः। दैवयोगान्मातापितरौ विपन्नौ । तदनन्तरं तदीया भार्यापि तथैव धनं प्रेषयति स्म । कियता कालेन धनं निष्ठितम् । तदा तया स्वकीयमलङ्करणादिकं दासीहस्ते प्रेषितम् । एतावताऽक्कया विज्ञातम्—'एतद्गृहे धनं परिक्षीणम् । अथ शरीरालङ्करणादिकं किं गृह्यते ?'। इति विमृश्य सहस्ररूपटंककास्तथाऽलङ्करणादिकं पश्चात्प्रेषितम् । तदनन्तरमक्कया स्वसुतां कामपताकां प्रतीति विज्ञापितम्—'अयं पुमान् परिक्षीणधनः संजातोऽस्ति । अतस्त्याज्य एव'। इत्युक्ते गणिकया भणितम्—"येन धनं वित्तं दत्तं, येन सह षोडश वर्षाणि विलासः कृतः, स कथं त्यज्यते ?"। इत्याकर्ण्य कुट्टिनी प्राह—"पुत्रि स्वकुल ईदृश आचारोऽस्ति । यदुक्तम्—

**विभवो वीतसङ्गानां वैदग्ध्यं कुलयोषिताम् । दाक्षिण्यं वणिजां प्रेम वेश्यानाममृतं विषम् ॥१॥**

यो वित्तवान् भवति, स सेव्यते । निर्धनस्तु निष्पीडितेक्षुखण्डवत् त्यज्यते"। एवं प्रोक्तापि यावत्सा सुलसं न त्यजति, तावत्तयाऽक्कयैकवारं सुलसं प्रतीति भणितम्—"भो भद्र क्षणमात्रमधोभूमावनतर, यथोपरितनभूमौ प्रमार्जनं विधीयते"। इत्युक्ते तेन चिन्तितम्—'षोडशवर्षमध्ये कदापि नेदृशं वाक्यं श्रुतम् । अद्यैवं श्रूयते तत्किम् ?'। इति विमृशन् धवलगृहादध उत्तीर्य संस्थितः । तावता चेटीभिरुक्तम्—'कथं त्वं निर्लज्जस्तिष्ठसि ?'। इति गदिते तद्गृहान्निःसृत्य स्वगृहं प्रति चलितः ।

शनैर्योगिना तावद्वरत्रा मुक्ता, यावता स कूपतले रससमीपे गतः। तावता स नमस्कारमंत्रं पठन् रसं गृहीतुं प्रवृत्तः। एतावता तस्य कूपस्य मध्यादिति स्वरो निर्गतः—" अयं रसः कुष्टिसंज्ञो वर्तते। अतः कारणाद्भोः साधर्मिक करेण रसस्पर्शं मा कुर्याः। अस्मिन्रसे शरीरक्षेपे प्राणत्याग एव भवति। त्वं जैनधर्माराधको वर्तसे, अतस्तव साहाय्यं करोमि। तुम्बिकं समानय, यथा रसेन संपूर्य ददामि"। एवंविधं तद्वचनं समाकर्ण्य सुलसः प्रोचे—" त्वां धर्मबान्धवं वन्दे। यदुक्तम्—

अन्ने[1] देसे जाया अन्ने देसे वड्ढिया देहा। जे जिणसासणरत्ता ते य मे बंधवा भणिया ॥ १ ॥

अथ त्वदीयं स्वरूपं कथय। मम कौतुकं वर्तते। अस्मिन् कूपे त्वं कः कुतः समागतस्तन्निवेदय"। इत्युक्ते स माह—" अहो मदीयं स्वरूपं शृणु, अहं विशालानगरीवास्तव्यो जिनशेखराभिधानो वणिक् वाणिज्यार्थं प्रवहणमारुह्य समुद्रे चलितः। प्रवहणं भग्नम्। महता कष्टेन फलहकं प्राप्य जीवन् समुद्रमुत्तीर्णः। ततश्चाटव्यां भ्रमन् परिव्राजकेन विप्रतार्य रसलोभेन कूपे क्षिप्तः। यावता तुम्बकं भृत्वा कूपकण्ठे गतस्तावता तेन योगिना रसतुम्बकं गृहीत्वाहं रसमध्ये निक्षिप्तः। एवं मन्ये, त्वमपि तेन योगिना प्रक्षिप्तो भविष्यसि। स महान् दुरात्मा वर्तते। त्वं तस्य विश्वासं मा कुर्याः। भोः सुश्रावकाय त्वमपि ममाग्रे स्वगोत्रादिसमाचारं निवेदय"। इत्युक्ते तेन सुलसेन तस्याग्रे स्ववृत्तान्तः समग्रोऽपि निगदितः। एतावता तेन साधर्मिकेण तुम्बकद्वयं रसेन भृत्वा तस्मै सुलसाय प्रदत्तम्। ततश्च तेन सुलसेन रसभृतं तुम्बकयुग्मं मञ्चिकातले बद्ध्वा रज्जुश्चालिता। एतावता परिव्राजकेन

१ अन्यस्मिन् देशे जाता अन्यस्मिन् देशे वर्द्धिता देहा। ये जिनशासनरक्तास्ते च मे बान्धवा भणिता. ॥

रत्नानि गृहीत्वा ततः प्रचलितः । क्रमेण समुद्रतटे वेलाकूलं नाम पुरं प्राप्तः । सश्रीकं नगरं विलोक्य तन्मध्ये प्रविश्य श्रीसारस्य श्रे-ष्ठिनो गृहे समेतः । तेनापि श्रेष्ठिना तस्य भोजनादिसामग्री विहिता । ततः परं तत्र कोटिद्वयेन रत्नद्वयं विक्रीय ततो भाण्डान्यादाय शकटानि भृत्वा गुरुसार्थेन सह स्वदेशं प्रति चालितः । तावता महाटवीं प्राप्तः । तत्र मध्याह्नावसरे एकत्र प्रदेशे ससार्थः स्थितः । स-मग्रोऽपि सार्थजनो धान्यपचनादिकार्येषु व्यग्रो जातः । एतावता भिल्लतस्करैः कुतोऽप्यतर्कितैरेत्य स सार्थो लुण्टितः । तदा सुलसः संनह्य सपरिवारोऽपि तस्करसेनया सह योद्धुं प्रवृत्तः । तावता सुलससेवका भिल्लैः पराभूताः सन्तः पलायनं चक्रुः । सुलसो जीवन् भिल्लैर्बद्धः द्रव्यलोभेन क्वापि वणिक्पार्श्वे विक्रीतः । वणिजा भिल्लपार्श्वाच्च गृहीत्वा पारसकूलागतस्य मनुष्यरक्तार्थिनो लोकस्य समीपे वाञ्छितविचार्ये स विक्रीतः । तैर्मनुष्यान् गृहीत्वा स्वदेशे गत्वा तेषां शरीरतो रुधिरं निष्कास्य कुण्डेषु क्षिप्यते । तन्मध्ये जन्तव उत्पद्यन्ते । तैर्जन्तुभिः कृमिरागो भवति । तेन कृमिरागेण चीवरं रज्यते । तस्मिन् दग्धे तदीया रक्षापि रक्तवर्णा भवति । स सुलसस्तत्र तादृशं दुःखं सहन्नेकदा रुधिरविलिप्तदेहः सन् व्योममार्गेण भारण्डपक्षिणापहृत्य रोहणगिरौ शिलातले मुक्त्वा यावच्च भक्षयितुं पक्षी समुद्यतो बभूव तावताऽपरेण भारण्डपक्षिणा दृष्टः । तदा द्वावपि पक्षिणौ परस्परं कलहं कर्तुं लग्नौ । तावता स सुलसः मुखात्पतितः सन् समुत्थाय समीपस्थगुहायां प्रविष्टः । तयोरन्यत्र गतयोः स गुहामध्यान्निर्गतः । ततश्चैकस्मिन्निर्झरे गात्रं प्र-क्षाल्य व्रणसंरोहिण्या औषध्या रसेन व्रणानि संरोह्य तस्मात्पर्वतादुत्तीर्य गतस्तदा रेणुसमूहान् खनित्रकरान्नरांस्तथा पञ्चकुलं दृष्ट्वा सुलसः कस्यापि नरस्य पार्श्वे इति पप्रच्छ—" भो भद्र कोऽयं गिरिः ? को देशः ? अत्र च को भूपतिः ? एते नराः खनित्रैः किं खनंति ? एतत्पञ्चकुलं कीदृक् ? इत्यादिकं समग्रमपि समाचारं ममाग्रे निवेदय "। इत्युक्ते तेन नरेण भणितम्—" भो देशान्तरे यो

किलां कुर्वन्तः सहसा बुभुक्षिता इव कर्तरिकां करे दधाना हर्षेण नृत्यन्तः प्रकटीभूयैवं जल्पन्ति स्म—" हं हो यदि वैराग्यतो महामांसं विक्रीणासि, तर्ह्यत्र स्थाने निपत । यथा वयं त्वन्मांसं गृह्णीमः " । इत्युक्ते सुलसो निर्भयः संस्तत्र पतितः । ते सर्वेऽपि तन्मांसग्रहणाय यावत्परितो भ्राम्यन्ति स्म, तावता जिनशेखरदेवस्तं सुलसं तादृशीमवस्थां प्राप्तं विज्ञाय शीघ्रं समाययौ । तावता ते सर्वेऽपि भूतादयो नष्टाः । तदा देवः प्रोक्तवान्—" भोः सुलसश्राद्धाहं त्वां वन्दे । त्वया जैनशासनदक्षेण किमिदं विरुद्धं कर्म समारब्धम् ? त्वं मामुपलक्षयसि ? एषोऽहं भवतां मित्रं जिनशेखरनामा । यस्य त्वया कूपमध्ये निर्यामणा कारिता । सोऽहं युष्मदाराधनाप्रसादेन मृत्वा सहस्रारेऽष्टमकल्प इन्द्रसामानिकः सुरो जातः । तस्मात्कारणात्त्वं मम गुरुरेव " । इत्युक्ते सुलसोऽपि तं जिनशेखरश्राद्धं सुरत्वं प्राप्तं विज्ञाय तं दृष्ट्वा शीघ्रमेव समुत्थायेति जजल्प—' भो धर्मबान्धवाहमपि त्वां वन्दे ' । इत्युदित्वा स्वागतादिकं पप्रच्छ । ततः परं देवोऽवादीत्—' भो भद्र तव किमभीष्टं करोमि, तत्कथय ' । इति गदिते सुलसेनोक्तम्—" इदमेव प्रियं जातं, यत्तावकीनं दर्शनं मम बभूव । तथाप्येवं ब्रूहि, अद्यापि मम निविडमन्तरायं कर्म किं परिक्षीणं विद्यते ? येन कारणेनाहं व्रतं गृह्णामि " । इत्युक्ते देवः प्राह—" वत्स त्वयाल्पदेवद्रव्यविनाशः पूर्वभवे कृतस्तत्कर्मोदयमागतं, तत्कर्म क्षीणप्रायं वर्तते । परं निःशेषं न परिक्षीणमस्ति । किंचिद्भोगफलमप्यस्ति । तेनाद्यापि त्वं व्रतयोग्यो न वर्तसे " । इति निगद्य देवेन बहुमूल्यसुवर्णराशयस्तथा चारुवस्त्रादिकं सर्वमपि प्रीत्या सुलसाय ढौकितम् । तदा सुलसेन प्रोक्तम्—" भो देव त्वं मामर्थसमन्वितं स्वं स्थानं प्रापय । यथा मम प्रसिद्धिर्भवति " । इति प्रजल्पिते देवोऽपि तथैव कृत्वा स्वस्थानं जगाम । एतावता सुलसागमनं ज्ञात्वा पुरस्वामी भव्ययुक्त्या पुरप्रवेशमहोत्सवमकारयत् । ततः सुलसोऽपि नृपाग्र उपायनं ढौकयित्वा प्रतिपत्तिं चकार । सुलसपत्न्या

कूपतटं यावत्समूर्ध्वं समाकृष्येति प्रोचे—'भो भद्र प्रथमं तुम्बिकं समर्पय । पश्चात्त्वां निष्कासयामि' । इत्युक्ते सुलसः प्राह—'तु-म्बकद्वयं शल्ययुक्त्या मञ्चिकाया अधस्तने निबद्धमस्ति' । पुनरपि योगिना रसतुम्बिके याचिते । स यावन्न ददाति तदा तेन तुम्बकसहितोऽपि सुलसः कूपे निक्षिप्तः । परिव्राजकस्तु कूपं परित्यज्य ययौ । एतावता सुलसः शुभकर्मयोगात् कूपमेखलायां पतितः, रसमध्ये न पतितः । तदनन्तरमसौ सुलसो गाढस्वरेण श्रीनमस्कारमंत्रमपठत् । यदुक्तं—

**एसो मंगलनिलओ भयविलओ सयलसंघसुहजणओ । नवकारपरममंतो चिंतियमित्तं सुहं देई ॥१॥**

ततो दुःखितः सन्नात्मनैवात्मानं बोधयामास—" रे जीव यदि त्वं परिग्रहनिवृत्तिमकरिष्यस्तर्हीदृशं कष्टं तव नाभ-विष्यत् । अरे पापिन्नधुनापि त्वं स्वरात्रिकं संयमं गृहीत्वाऽनशनं गृहाण, यथा शीघ्रमेव संसारनिस्तारो जायते " । इत्युक्त्वा यावता स तच्चारित्रं कर्तुमुद्यतस्तावता कूपमध्यस्थेन जिनशेखरश्राद्धेन तं प्रतीति भणितम्—" भोश्चारित्रग्रहणे उत्सुको मा भव । तत्रासात् कूपान्निःसरणोपायं शृणु, कापि महाद्भुता गोधा केनापि वर्त्मना संभूयात्र कूपे रसपानाय कदा कदा समायाति । यदा सा रसं पीत्वा पश्चाद्वलति, तदा तत्पुच्छे गाढं विलग्य त्वमपि कूपमध्यान्निःसरेः । साम्प्रतमेव मम प्राणान्तो भविष्यति । अतः का-रुण्यादाराधनां कारय " । इत्युक्ते सुलसोऽपि श्रीजिनशासनतत्त्वज्ञस्तदीयं प्रान्तकालं विज्ञाय प्रवरामाराधनां व्यधापयत् । निर्यामणा कारिता । चतुःशरणं समाख्यातम् । पञ्चपरमेष्ठिपदान्यर्हत्सिद्धाचार्योपाध्यायसर्वसाधुप्रधानानि विवरणं विधाय तस्य संश्रावितानि । सुकृतानामनुमोदना दुष्कृतानां च गर्हा कारिता । चतुरशीतिलक्षजीवयोनीनां मिथ्यादुष्कृतं कारितः । एवंविधा सिद्धान्तोक्ताराध-ना सविस्तरतया सुलसोक्ता जिनशेखरोपासकेन स्वचित्तेऽङ्गीकृता । ततः परमनशनं विधाय नमस्कारं चित्ते चिन्तयन् शुभध्यानेन

ष्यावः'। इत्युक्त्वा स्वगृहे नृपेण गत्वा स्वपुत्रो राज्ये निवेशितः। ततस्तौ नृपसुलसौ सद्यासनयात्मानं धन्यं मन्यमानौ गुरोः समीपे व्रतं जगृहतुः। ततः संयमं प्रतिपद्यात्युग्रं तपो विदधतुः। ततश्च सुलसस्तु सकलकर्मक्षयं कृत्वा केवलज्ञानं संप्राप्य शिवं ययौ। राजापि निरतिचारं संयमं प्रतिपाल्य दिवं ययौ। इति पञ्चमाणुव्रतविषये भगवान् श्रीशान्तिजिनश्चक्रायुधनृपं प्रति सुलसकथां कथयामास ॥

॥ इति परिग्रहे सुलसकथा. ॥ ५ ॥

अथ भूयः स्वामी प्राह—"भो नृप मया त्वदग्रे पञ्चाप्यणुव्रतानि प्रोक्तानि। अथ दिग्व्रतभोगोपभोगानर्थदण्डाख्य गुणव्रतत्रिकं श्रूयताम्—यत्पूर्वादिषु दिक्षु तिर्यक् तथोर्ध्वमधश्च गमने परिमाणं क्रियते, तत्प्रथमं दिग्व्रतनामकं गुणव्रतं कथ्यते। एतस्य प्रमाणेऽकृते सति जीवस्तु बहुविधानि दुःखानि प्राप्नोति। यथा स्वयंभूदेवाख्यो वणिक् तस्मिन्नकृते म्लेच्छदेशं प्राप्तो बहुधा दुःखं भेजे"। इत्युक्ते चक्रायुधनृपेणोक्तम्—'तत्स्वरूपं स्वामिन् कथयतु'। अथ प्रभुः प्राह—

॥ अथ स्वयंभूदेवकथा ॥

इहैव भरते गङ्गातटं नाम पुरमस्ति। तत्र सुदन्तो नाम नृपतिर्वर्तते। सर्वत्र दूतान् प्रस्थाप्य समग्रदेशसमाचारं यो राजा स्थानस्थ एव जानाति। तत्र स्वयंभूदेवनामा कृषिक्रियादितत्परः कौटुम्बिको विद्यते। परंतु स संतोषवर्जितोऽस्ति। स चैकदा रात्रौ निद्राच्छेदे संजाते सत्येवं चिन्तयामास—"अत्र स्थितस्य मम वाञ्छितो लाभो न भवति। ततः कारणात् क्वापि देशान्तरे गत्वा लक्ष्मीं समुपार्ज्य स्वकीयान्मनोरथान् पूरयिष्यामि"। इति विचिन्त्य सामग्रीं विधाय स उत्तरापथं प्रति चलितः। क्रमेण लक्ष्मीशी-

सुकुलीनया भर्तुः समागमे महीयान् वर्धापनोत्सवश्चक्रे । स्वजनो सत्कृतः । प्रमोदभरनिर्भरा जाता । तथा या कामपताकाभिधा वेश्या तस्मिन्नगरेऽस्ति । सा सुलसगमनादनन्तरं वेणीबन्धं कृत्वा श्वेतवस्त्राणि परिधायान्यपुरुषान् परित्यज्य शुद्धशीला सती सुलसमुद्दिश्य स्थितास्ति । सापि द्वितीया प्रिया स्नेहतत्परा बभूव । ततश्च स ताभ्यां प्रियाभ्यां सह भोगान् भुंक्ते स्म । अन्यदा स सुलसः स्वचित्त एवं चिन्तयामास—" रे आत्मन् लोभलम्पटतया परिग्रहप्रमाणं विना तव किं किं दुःखं नाभवत् ? । अथ परिग्रहप्रमाणं कुरु " । इति विचिन्त्य स्वमनसैव परिग्रहप्रमाणं विधाय शेषद्रविणं देवगृहादिषु सप्तक्षेत्रेषु धर्मव्यये व्यधात् । यदुक्तं—

जिनभवनबिंबपुत्थयसंघसरूवाइं सत्त खित्ताइं । जिणोद्धारो पोसहसाला साहारणं चेव ॥ १ ॥

तदनन्तरं कियत्यपि काले गते कर्मदोषेण तस्य धनं परिक्षीणम्, यथा ग्रीष्मकाले सरोजलं शुष्यति । ततश्च स सुलसो यावद्विच्छायवदनो भूत्वोपविष्टः । यदुक्तम्—

वरं बाल्ये मृत्युर्न तु विभवहीनं निवसनं, वरं प्राणत्यागो न पुनरधमागारगमनम् ।
वरं वेश्या भार्या न पुनरविनीता कुलवधू—र्वरं वासोऽरण्ये न पुनरविवेकाधिपपुरे ॥ १ ॥

तिष्यति, तदाऽस्मादलङ्कारात्तवैव शरीरेऽप्यनर्थो भविष्यति "। इत्युक्ते सा प्राह—" यद्येतद्देहे न परिधीयते, तर्ह्यनेन किं कार्यम् ? तदेव भव्यं यद्भुज्यते। यदा धाटी समेष्यति तदा शरीरादहं स्वयमेवोत्तारयिष्यामि "। इत्युक्ते स द्विजो मौनं कृत्वा स्थितः। एकदा प्रचण्डभिल्लधाटी तत्र ग्रामे समागता। दैवयोगेन तस्यैव विप्रस्य गृहे प्रविष्टा। तदा विप्रपत्नी तैर्भिल्लैः सालङ्कारा दृष्टा। तैः सा गृहीता। तस्याः पीवरशरीराद्विभूषणानि यदा नोत्तरन्ति, तदा ते भिल्लास्तदीयहस्तपादादिकं शरीरं निकृष्टतया सर्वमपि छित्वा विभूषणानि गृहीत्वा स्वस्थानं जग्मुः। सा त्वार्तध्यानेन मृत्वा नरकं ययौ ॥

॥ इति भोगोपभोगयोः कथा ॥ ७ ॥

पुनरपि श्रीशान्तिजिनेन भगवता चक्रायुधनृपतिं प्रतीत्युक्तम्—" भो अथ तृतीयमनर्थदण्डाख्यं गुणव्रतं कथ्यते। तच्चतुर्भेदम्। यच्च मुहूर्तात्परतोऽपध्यानं क्रियते, स प्रथमो भेदः। यत्प्रमादाचरणं स द्वितीयो भेदः। हिंसोपकरणदानं स तृतीयो भेदः। पापोपदेशाख्यश्चतुर्थो भेदः। अत्र व्रते समृद्धदत्तस्य दृष्टान्तं शृणु—

॥ अथ समृद्धदत्तस्य कथा ॥

धातकीखण्डद्वीपे भरतक्षेत्रे रैपुरं नगरं वर्तते। तत्र रिपुमर्दनो नाम राजाभूत्। तस्मिन् पुरे समृद्धदत्तनामा कौटुम्बिक आसीत्। स चैकदा मध्यरात्रिसमये सुप्तोत्थितः सन् स्वचित्त इति चिन्तयामास—" यदि मम लक्ष्मीर्भविष्यति तर्ह्यहं राजा भविष्यामि। षट्खण्डप्रमाणं भरतक्षेत्रं साधयिष्यामि। तदनन्तरं वैताढ्यपर्वतवासिनो विद्याधरा मम व्योमगामिनीं विद्यां दास्यन्ति।

र्पके नगरे ययौ । तत्र प्रवेशं विधाय तस्य वाणिज्यव्यवहारं कुर्वतोऽपि तादृश एव लाभोऽभूत् यादृग् निजकर्मणा सृष्टोऽस्ति । अन्यदाऽन्यत्र नगरे धनाशया स बभ्राम, परं तु भाग्याधिकं क्वापि न लब्धवान् । स स्वचित्त इति वाक्यं न चिन्तयति स्म । यतः—

" भाग्याधिकं नैव नराधिपोपि, ददाति वित्तं चिरसेवकेभ्यः ।
निरन्तरं वर्षति वारिधारस्तथापि पत्रत्रितयं पलाशे ॥ १ ॥"

ईदृशं विचारं विमुच्य भाग्याधिकं फलं वाञ्छन् पुनरप्यन्यत्र क्वापि पुरे ययौ । तत्र केचिद्वणिजो दृष्टाः । तदा तेन कौटुम्बिकेन त इत्थं पृष्टाः—'भो यूयं कुतो देशात्समागताः?'। तदानीं तैः प्रोक्तम्—'वयं वाणिज्यार्थं चिलातदेशं गत्वा बहु धनं समुपार्ज्यात्र समागताः'। इत्याकर्ण्य स स्वयंभूदेवोऽपि क्रयाणकं गृहीत्वा शम्बलादिकं विधाय बहुसार्थेन सह तं देशं प्रति चचाल । क्रमेण महातप्तवालुकाभिधं मार्गं समुल्लंघ्य ततः परमतिशीतलं हिममार्गमप्यतिक्रम्य ततश्चातिविषमे गिरिमार्गे ययौ । 'लोभाभिभूतः पुमान् किं किं न करोति?'। तदनन्तरं स यावच्चिलातदेशस्य समीपे गतस्तावता तत्र म्लेच्छनृपस्यान्यनृपैः समं विरोधोऽभूत् । शत्रुराजभिरिति कारणात् स सार्थः सर्वसारमुपादाय स्वगृहान् प्रति चालितः इतीति किं? 'यदसौ चिलातदेशं याति'। स्वयंभूदेवस्तु तदीयां दृष्टिं कथमपि वञ्चयित्वा गतः । तत्र भिल्लकिंकरैस्तं गृहीत्वा हस्तयोः पादयोश्च बध्वा स रुधिरेण विलिप्य तैश्चुरात्मभिस्ततो नीत्वा स चाटवीमध्ये मुक्तः । तावता मृतकभ्रान्त्या तस्योपर्यनेके पक्षिणः पतन्ति । चञ्चुप्रहारैस्तं पीडयन्ति । तावत्ते पुलिन्दबालका बाणघातैर्गृध्रान् विनाश्य विनाश्य सन्ध्यासमये तं स्वयंभूदेवं स्वगृहे समानीय विगतबन्धनं कृत्वा भोजयित्वा यत्नेन निजमन्दिरे रक्षन्ति । पुनर्द्वितीयेऽपि दिन एवं कुर्व-

दृष्टं तदीयं शरीरं शोफेन पीडितम्। कियद्भिर्वासरैस्तच्च शरीरं पुनरारोग्यं जातम्। तदनन्तरं क्रमेण वसन्तपुरपत्तने गत्वा क्रयाणकानि विक्रीय विशिष्टं लाभं संप्राप्य ततो वलित्वा निजं स्थानं समागत्य समाधितत्परः सप्तसु धर्मक्षेत्रेषु वित्तव्ययं कुर्वन् गृहवासं पालयामास। इतश्च प्रान्तसमये आराधनां विधायानशनेन मृत्वा त्रिदिवं प्राप्तः। ततश्च्युत्वा क्रमेण मोक्षं गमिष्यति॥

## ॥ इति समायिके सिंहश्रावककथा ॥ १ ॥

अथ द्वितीयं शिक्षाव्रतं देशावकाशकं नाम कथ्यते। यत्र दिग्व्रतपरिमाणस्य तथापरेषामपि व्रतानां दिनं प्रति संक्षेपो विधीयते। तथा च यत्रानयनप्रयोगादिकाश्चत्वारोऽतिचाराः प्रोक्ताः सन्ति। एतदपि व्रतं शुद्धं पालितं सदिहलोके परलोकेऽपि गङ्गदत्तश्राद्धवत्सफलं जायते।

## ॥ अथ गङ्गदत्तश्राद्धकथा ॥

अत्रैव भरतक्षेत्रे शंखपुरनाम्नि पुरे गङ्गदत्ताभिधो प्रसिद्धो वणिग्वरो वसति स्म। एकदा तेन गुरुसमीपे श्राद्धधर्मो गृहीतः। निरन्तरमेव स द्वादशभेदं तं श्राद्धधर्मं प्रतिपालयामास। इतश्चैकदा तेन देशावकाशं गृहीतम्—'अद्य मया चैत्यगमनं विनान्यथा गृहाद्बहिर्न गन्तव्यम्'। इत्यभिग्रहे कृते केनापि मित्रेण वणिजा समागत्य तं गङ्गदत्तं प्रतीति भणितम्—"पत्पुराद्बहिः सार्थश्चैकोऽद्य समागतोऽस्ति। यदि त्वं समागच्छसि तर्हि शीघ्रमेवावां तत्र गत्वा महालाभविधायकं पण्यं गृह्णीवः"। इति जल्पिते गङ्गदत्तः प्राह—"भो मित्राद्याहं तत्र न समेष्यामि, यतो मया देशावकाशकं व्रतं गृहीतमस्ति। अद्य चैत्यं विनान्यत्र

ततो विद्याबलेनाहं नभोमार्गे उत्पतिष्यामि" इति विचिन्तयन् समृद्धदत्तः शय्यात आकाशं प्रति यावदुत्पतितस्तावत्पृथिव्यां पतितः शरीरे गाढं पीडितः। तदनन्तरं गृहमानुषैः स आक्रन्दं कुर्वन् पुनः शय्यायां निक्षिप्तः। कियता कालेन महता कष्टेन तस्य शरीरे वेदना प्रशान्ता। स्वस्थशरीरो जातः। एतावतैकदा तेन विशिष्टलोहमयः खड्गः प्रभूतद्रव्येण सर्वजनसमक्षं क्रीतोऽभूत्। स कदाचित्प्रमादाद्रात्रौ गृहमाङ्गण एव विस्मृतः। स कौटुम्बिको गृहमध्ये गत्वा सुप्तः। ततश्च प्रहरद्वये स्मृतः। परं प्रमाददोषेण स खड्गस्तेन गृहान्तरे न नीतः। को ग्रहीष्यति मदीयं खड्गमिति चिन्तयन्निद्रां प्राप्तः। अत्रान्तरे रजन्याश्चरमे यामे तस्य मन्दिरे चौराः प्रविष्टाः। ते खड्गं गृहीत्वा स्वस्थानं ययुः। अथ ते दुरात्मानश्चौराः तस्य खड्गस्य बलेन कथंचिन्महता कष्टेन नगरश्रेष्ठिसुतं बन्द्यां जगृहुः। तदा नृपपुरुषैस्ते चौरा हताः। चौरैः श्रेष्ठिपुत्रो व्यापादितः। ततः समृद्धदत्तस्य खड्गः पुरारक्षकैर्नृपाग्रे ढौकितः। तदानीं क्रुद्धेन राज्ञा तं समाकार्येति प्रोक्तम्—'अरे दुष्ट त्वयेदृशं किं पापकर्म विहितम्?'। तदा तेनोक्तम्—'स्वामिन्मया पापं न कृतम्'। इत्युक्ते नृपः प्राह—"अयं खड्गस्त्वदीयो भवति न वा? यदि त्वदीयं खड्गाहरणं तर्हि त्वमेव पापकर्मकारी"। इति निगदिते तेन खड्गविस्मृतिस्वरूपं सर्वमेव नृपाग्रे कथितम्। तथाप्यनर्थदण्डकृते दण्डितो धृतः परं मुक्तः। अन्यदा पुनः स एव कस्यापि नृपवैरिणः स्वभावमपरिज्ञाय सहसा विषं ददौ। तदा तेन तद्विषं गृहीत्वा तस्य भूपस्य विनाशाय ग्रामस्य तटाके क्षिप्तम्। तदा तज्जले पीते सति केचिज्जना मरणं प्राप्ताः। तावता नृपेण ज्ञातम्। राज्ञा मूलशुद्धिर्गृहीता। तदेति विज्ञातम्—"यत्समृद्धदत्तेनामुकस्य मद्वैरिणो विषं दत्तं, तेन वैरिणा मद्विघाताय सरोजले विषं क्षिप्तम्"। इति विज्ञाय तं कौटुम्बिकमाकार्यान्यायकारित्वात् स भूभुजा दण्डितः। ततश्चैकवेलं स ग्रामपर्षद्युपविष्टोऽभूत्। तावता कश्चित्कौटुम्बिको वृषभयुग्मं गृहीत्वा तत्रागतः। एतावता समृद्धदत्तस्तत्समीप इति पृष्टवान्—

तिथिपर्वहर्षशोकास्त्यक्ता यन महात्मना । स त्वतिथिर्विजानेयः परः प्राघूर्णिको मतः ॥ १ ॥

एवंविधस्यातिथेन्यायोपार्जितैः कल्पनीयैः प्रासुकैरोदनादिसुद्रव्यैर्देशकालोचितैः श्रद्धया यः सत्कारो विधीयते, स चातिथिसंविभागः प्रकीर्तितः । स भक्तिभावेन सुसाधूनां विहितो महापुण्यनिबन्धनं स्यात् । यथा शूरपालनरेन्द्रस्य पुत्रजन्मदानप्रभावात्सुखसम्पदो बभूवुः" । इत्युक्ते चक्रायुधनृपो जजल्प—'भगवंस्तस्य शूरपालनृपस्य दृष्टान्तः प्रोच्यताम्' । इत्युक्ते श्रीशान्तिजिनः सुधामधुरया गिरा तत्कथां प्राह—

॥ अथ शूरपालनृपकथा ॥

इहैव भरतक्षेत्रे मनोज्ञश्रियाभिरामं काञ्चनपुरं नाम सत्पुरं विद्यते । यदुक्तम्—

वापीवप्रविहारवर्णवनिता वाग्मी वनं वाटिका, वैद्यब्राह्मणवादिवेश्मविबुधा वाचंयमा वल्लकी ।
विद्यावीरविवेकवित्तविनया वेश्या वणिक् वाहिनी, वस्त्रं वारणवाजिवेसरवरं राज्यं च वै शोभते ॥ १ ॥

तत्र जितारिनामा नृपतिः साम्राज्यं प्रत्यपालयत् । तस्य राज्ञी सुलोचनाख्या बभूव । तस्मिन्नगरे एको महीपालनामा क्षत्रियोऽभूत् । परं स कृषीवलः सदैव कर्षणमेव करोति । तदीया भार्या धारिणी संजज्ञे । तत्कुक्षिसंभवाः क्रमेण धरणीधरकीर्तिधरपृथ्वीपालशूरपालाख्याश्चत्वारः सुता बभूवुः । ते चत्वारोऽपि शैशवमतिक्रम्य यौवनं प्राप्ताः । तदा चन्द्रमती कीर्तिमती शान्तिमती

गृहाद्बहिर्न गन्तव्यम् "। तदा पुनस्तेनोक्तम्—" भो अद्य महोत्कृष्टं धनलाभं कथं न गृह्णासि ? अन्यस्मिन्नपि दिने पुनर्व्रतं विधास्यसि "। ततः पुनर्गङ्गदत्तः प्राह—'हे सखे येन धर्महानिर्भवेत्तेन महारम्भविधायिना लाभेनापि पूर्यताम्'। इत्युक्ते तस्य निश्चयं ज्ञात्वा तन्मित्रं स्वस्थानं गतम्। ततो व्रते परिपूर्णे सति परस्मिन् दिने स गङ्गदत्तः सार्थमध्ये प्रययौ। क्रयाणकं सर्वमपि तथैव स्थितं दृष्टम्। केनापि न गृहीतमस्ति। तदा तेन तत्क्रयाणकं गृहीत्वा चतुष्पथे विक्रीय महान् लाभः समुपार्जितः। अथ तेन गङ्गदत्तेन चिन्तितम्—" नूनमेष प्रभावो धर्मस्यैव। अतः कारणान्मयेदं वित्तं देवगृहादिधर्मस्थानेषु नियोज्यम् "। इति विचिन्त्य तेन श्रेष्ठिना जिनानां पूजा विविधैरुपायैः कृता। भक्त्या श्रीसंघस्य वस्त्रभोजनताम्बूलादिसत्कारो महीयान् विदधे। एवं धर्मोद्यमं कृत्वा प्रान्तेऽनशनादिना मृत्वा स गङ्गदत्तस्त्रिदिवत्वं प्राप्तः। ततः क्रमेण मोक्षमपि प्राप्स्यति ॥

॥ इति देशावकाशके गङ्गदत्तकथा ॥ १० ॥

भोः चक्रायुधनृप देशावकाशिकं व्रतं दृष्टान्तसहितं तवाग्रे निगदितम्। इदानीं निदर्शनसहितं पौषधव्रतं कथयामि। यः पौषधः सुश्रावकेण चतुःपर्व्यां निश्चयेन पुण्यपरिपुष्ट्ये क्रियत एव। पुनः स चतुर्धा विज्ञेयः। प्रथम आहारपौषधः स द्विविधः सर्वतो देशतश्च। यः सर्वतः स चतुर्विधाहारप्रत्याख्यान एव भवति। यो देशतः स त्रिविधाहारोपवासे तथा चाचाम्लादिषु समस्तप्रत्याख्यानेष्वपि जायते। तथा द्वितीयो देहसत्कारपौषधः। सोऽपि सर्वदेशभेदाद्द्विधा। सर्वशरीरसत्कारवर्जनमेको भेदः। स्नानकरणादिको द्वितीयो भेदः। तथा यस्तृतीयो ब्रह्मचर्यपौषधः सोऽपि द्विविधः। स्त्रीणां करस्पर्शादेरपि वर्जनं प्रथमो भेदः। देशतश्च

अहं देशान्तरे गत्वा धनमुपार्ज्य शीघ्रमेव समेष्यामि"। इति निगद्य तदीयशिरसि स्वकराभ्यां वेणीबन्धं विधाय तथा कञ्चुकं हृदङ्गे परिधाप्येत्युक्तम्—" अयं वेणीबन्धमोक्षो मयि समागते कार्यः। तथा मां विना कञ्चुकोऽपि वक्षसो नोत्तारणीयः" । स्वप्रियाया एवं कथयित्वा शूरपालः स्वमन्दिरात्खड्गमादाय देशान्तरं प्रति चलितः। तत्प्रियापि क्षणमात्रं हर्षविषादं स्वचित्ते धृत्वा ततः स्वकीयकर्माणि कर्तुं प्रवृत्ता। एतावता प्रभाते जाते महीपालादयः सर्वेऽपि शूरपालमपश्यन्त इतस्ततो विलोक्य विलोक्य समाकुलाः सन्तस्तत्प्रियासमीप इति प्रश्नं विदधुः—' हे भद्रे किमपि जानासि, शूरपालः क्व गतः ?'। इत्युक्ते तया निगदितम्—' नाहं जानामि '। ततश्च तदीयं समाचारमजानन्तस्ते सर्वेपि मातापिताभ्रात्रादय इति परस्परं मंत्रयितुं लग्नाः—' स शूरपालः केनापि कथं पराभूतः ? येन गृहान्निःसृत्य ययौ '। तदा ते तनया इति प्रोचुः—" हे तातास्माकं मध्ये केनापि स पराभूतो नास्ति। प्रायः कनिष्ठो भ्राता सर्वेषामपि वल्लभ एव स्यात्"। पुनस्तैः पित्रादिभिर्वधूटी पृष्टा—'हे भद्रे त्वया सह किञ्चित् रोषकारणं तस्य न जातम् ?' तदा तया प्रोचे—" मदीयभर्तुर्मया सह रोषकारणं कदापि न जातमस्ति। स्वयमेव भर्त्रा मदीयो वेणीदण्डो ग्रथितोऽस्ति। तं वेणीबन्धं विधायेति प्रोक्तम्—' हे प्रियेऽयं वेणीमोक्षो मया स्वहस्तेन विधातव्यः '। इति कथयित्वा स क्वापि गतस्तन्न जानामि " । तदा त्रयोऽपि बान्धवाः स्वचित्त इति व्यचिन्तयन्—" मात्रा किंचिद्भोजनादिना वधूटी पराभूता भविष्यति। तेन हेतुना स पराभूतो देशान्तरं गतः। यतः—

जननीं जनकं बन्धुं धनं धान्यं गृहं गृहान्। अपमानहता दूरे त्यजन्ति तानि मानिनः ॥१॥

शीलमती इति नाम्ना तेषां चतुर्णामपि क्रमेण चतस्रो भार्या जाताः । एकदा वर्षाकाले ते चत्वारोऽपि महीपालसुताः पाश्चात्यरजन्यां स्वगृहात्समुत्थाय क्षेत्रे कर्मकरणाय ययुः । पश्चात्तेषां प्रिया अपि क्षेत्रं प्रति निर्गताः । एतावता मार्गे तासां गच्छन्तीनां गर्जितं विधाय जलदः समाययौ । तदा ताः स्त्रियः समीपस्थवटवृक्षे गत्वा तदीय आधारे स्थिताः । तत्पृष्ठे तदीयश्वशुरोऽपि क्षेत्रं प्रति निर्ययौ सोऽपि वर्षाजलनिवारणाय वटतरोस्कंधे गत्वा गुप्ततया स्थितः । एतावता ताश्चतस्रोऽपि वध्वः श्वशुरमजानन्त्यो निर्जनं प्रदेशं विज्ञाय स्वेच्छया परस्परं वार्तां कर्तुं लग्नाः । श्वशुरः सावधानत्वेन श्रोतुं लग्नः । तदा ज्येष्ठवध्वा चन्द्रमत्या भाषितम्—' भोः सख्यः सांप्रतं स्वकीयं स्वकीयमिष्टं कथयन्तु ' । इत्युक्ते शीलमती प्राह—" कदाचिदन्ये कर्णे भविष्यन्ति । अतः कारणात् स्वकीया वार्ता कर्तुं न युक्ता " । इत्युक्ते इतरा स्माह—' हे शीलमति त्वं मा भैषीः । यतोऽत्र न कोऽप्यस्ति ' । इति निगदिते तया कनिष्ठया भणितम्—" तर्ह्यनुक्रमेण सर्वा अपि यूयं स्वस्वकामनाः कथयत । पश्चात्प्रान्ते मदीयको भविष्यति " इति श्रुत्वा पूर्वं चन्द्रमती प्राह—" पूर्वं सपक्वत्तिप्रचट उष्णश्च सुरभिघृतेन सह यदि स्यात्तर्हि मम रोचते । तदुपरि रब्बा दध्ना वा घृतेन सह रोचते, आम्रफलकचूर्करकचरिकया वा समन्विता " । ततो द्वितीया कीर्तिमती प्राह—" मम खंडघृतयुक्ता क्षैरेयी रोचते । अथवा शालिदाली च घृतान्विते तीक्ष्णाम्लव्यञ्जनैःसमं मम रोचेते " । ततस्तृतीया शान्तिमती जजल्प—" मदाकांक्षा श्रूयताम्, सुस्वादूनि मोदकादीनि पक्वान्नानि मम प्रियाणि वर्तन्ते । तथा मंडकपुरिकादिभक्ष्यं विशेषतः स्वादते " । तदनन्तरं चतुर्थी शीलमती प्रोवाच—" अहमन्नविषये तादृशी स्पृहालुर्न । यत् ' उदरं पूरं याचते न कूरं ' लोकोक्तिरीदृशी विद्यते । परमहमित्थं जानामि—भव्यजलैः स्नानं विधाय चन्दनादिना विलिप्य सुवस्त्राणि परिधाय विशिष्टभूषणान्यलङ्कृत्य श्वशुरज्येष्ठभर्तॄणां भव्यं

स्यथा दुर्बलाङ्गी परपुरुषालोकने पराङ्मुखी सा शीलमत्यपि राज्ञा दृष्टा । तदा नृपः स्वचित्ते दध्यौ—" अहो मम कुटुम्बस्य दैवयोगेन कीदृशी कर्मकरावस्था संजातास्ति ? । नूनमेष कर्मणां विपाकः । यदुक्तम्—

हरि हरि सुशिरांसि यानि रेजुर्हरि हरि तानि लुठन्ति गृध्रपादैः ।
इह खलु विषमः पुराकृतानां भवति हि जन्तुषु कर्मणां विपाकः ॥ १ ॥

इति कर्मविपाकस्वरूपं विचिन्त्य स राजा प्रत्येकं सर्वान् कर्मकरान् वीक्ष्य तथा स्वद्रकुम्बं समुद्दिश्य पञ्चकुलं प्रतीति प्रोवाच—" भो इमानि नव मानुषाणि रुचिरं कर्म कुर्वन्ति । भवद्भिरेतेषां किं किं दीयते ? " । इत्युक्ते तत्पञ्चकुलं प्राह—" हे स्वामिन् सर्वेषां कर्मकराणां दिनं प्रत्येकैको रूपकः प्रदीयते । तथा च मध्यमं कणभुक्तं युष्मदाज्ञया दीयमानमस्ति " । इति श्रुत्वा पुनर्नृपो बभाषे—" एषां साधुकर्मविधायिनां कश्चिद्विशेषः क्रियते । यत उक्तं च—

साध्वसाधुजने स्वामी निर्विशेषो यदा भवेत् । तदा साधुगुणोत्साहः साधोरपि न वर्धते ॥१ ॥

अतः कारणादमीषां वृत्तिर्द्विगुणा विधेया । कणभुक्तं चोत्तमं देयम् " । राज्ञेत्युदिते तेन पञ्चकुलेन तानि मानुष्याणि समाहूयेति जगदे—" हं हो अस्मत्स्वामिना भवतां प्रसादः कृतोऽस्ति । द्विगुणा वृत्तिस्तथा कणभुक्तमुत्तमम् " । इति निशम्य तैर्महीपालादिभिर्महाप्रसाद इत्युक्तम् । एतावता राज्ञा महीपालपार्श्वे पृष्टम्—" भोः किं तवैकः पुत्रो द्विकलत्रोऽस्ति ? यतः

अपि मातापितृकृतादपमानाद्भिन्नोरपि । इह मानधनैर्जीवैर्देशत्यागो विधीयते ॥ २ ॥
अपमानं गुरोरेव शिष्यस्यैव हितावहम् । यतस्ते तर्जयन्त्येनं वारणास्मारणादिभिः ॥ ३ ॥

स तस्यैव पराभवो ज्ञेयस्तत्पत्न्यां यो विहितः । यथा शरीरे पीडिते शरीरी किं न दूयते ? " । इति विचिन्त्य ते जनकभ्रात्रादयः सर्वत्र तं विलोक्य तत्समाचारमपि क्वाप्यप्राप्य विरहार्दिताः सन्तः स्वानि कार्याणि कर्तुं क्षमाः । इतश्च स शूरपालस्ततो निःसृत्य क्रमेण महाशालाभिधे पुरे गत्वा श्रान्तत्वात् बाह्योपवने जम्बूवृक्षच्छायायां सुष्वाप । निर्भरा निद्रा तस्य समागता । तत्प्रभावेण तस्य तरोश्छाया मध्याह्नेऽपि न न्यवर्तत । अत्रान्तरे तस्मिन् पुरेऽपुत्रो राजा विपन्नोऽस्ति । तदा सचिवादिकैः पञ्चदिव्याधिवासना चक्रे । तानि पञ्चापि महर्द्धयं परिभ्रम्य परिभ्रम्य तत्र सतागतानि यत्र शूरपालः सुप्तोऽस्ति । तं निरीक्ष्य करीन्द्रेण सारसी शब्दः कृतः । तुरगेण हेषारवश्चक्रे । तस्योपरि च्छत्रं स्वयमेव विकस्वरं जातम् । भृङ्गारैः स्वयमभिषेकः कृतः । चामराभ्यां स स्वयं वीजितः । जयजयारवो जातः । माङ्गलिकगीतादिशब्दः समुत्थितः । ततश्च मंत्रिसामन्तैः स सर्वाङ्गेषु विलोकितः । हस्तपादादिषु चक्रस्वस्तिकमत्स्याद्यैः शुभलक्षणैर्लक्षितो यदा दृष्टस्तदेति चिन्तितम्—" कोऽपि महान् पुमान् । एतत्प्रभावादस्य तरोश्छायापि नम्रत्वं न प्राप्तास्ति । एष स्वामी स्वकीयपुण्यैर्जातः " । ते सामन्ताद्याः परस्परं तदेवमूचुः । इतश्च स शूरपालो विनिद्रः सन् किमेतदिति विचिन्तयंस्तत्रैव सचिवाद्यैर्महताग्रहेण विष्टर उपवेश्य स्नपनं विधाप्य विलेपनादि कारयित्वा वस्त्रविभूषणैर्विभूष्य प्रवरहस्तिनं समारोप्य धृतातपत्रश्चामराभ्यां वीज्यमानो महाविभूत्या स पार्थिवो नगरे प्रवेशितः । ततः पुरपुरन्ध्रीभिः स्व-

अत्रान्तरे राज्ञा समादिष्टा सती स्वयमेव तेषां शालिदालिप्रभृतिकं प्रवरमशनं परिवेषयितुं लग्ना। तदा राज्ञा प्रोक्तम्—'हे प्रिये चिरकालचिन्तितान् सर्वान्निजमनोरथान् साम्प्रतं सफलीकुरु'। इत्युक्त्वा भोजनं कृत्वा स भूपतिः स्वपितरं प्रवरसिंहासने निवेश्य भ्रातृनपि यथोचितस्थान उपवेश्य तथा जननीं भ्रातृजायाश्च योग्यासनेषु संस्थाप्य जनकं च प्रणिपत्येति जजल्प—"हे तात सोऽहं त्वत्सुतो यो गृहान्निःसृत्य तदा गतोऽभूत्। इदं राज्यं तावकीनं वर्तते। अहं तव सेवकोऽस्मि। मया ज्ञात्वापि यत्त्वं गर्हितं कर्म कारितस्तत्पूज्यपादैः सर्वमपि मदीयमविनयादिकं क्षन्तव्यम्"। शीलमत्यपि सर्वेषां पादान्नत्वेदं प्रोवाच—"मया यद्भवतां वचनमकृत्वा युष्माकं सन्तापः कृतस्तत्क्षम्यताम्। हे श्वशुर यद्भवदीयवाक्येनापि मया कञ्चुको न मुक्तः, अवश्यं तद्भर्तृवाक्यं प्रतिपालितम्"। इति वाक्यानि निशम्य महीपालोऽपि प्रमुदितः संस्तं शूरपालं स्वपुत्रं समुपलक्ष्येत्यभ्यधापिष्ट—"अहो पुत्र त्वं निजपुण्यार्जितां राजलक्ष्मीं चिरं भुंक्ष्व। त्वद्दर्शनेन मम मानसं सहर्षमभूत्"। इत्युक्त्वा स राजनीतिनिपुणो जनकः स्वयं समुत्थाय तं शूरपालं बाहुभ्यां समादाय सिंहासने समुपवेशयामास।

**राज्ये प्रतिष्ठितः पुत्रो वन्द्यः पित्रापि साञ्जसम्। राजनीतिरियं येन महीपालोऽपि तद्व्यधात्॥ १॥**

इति कृत्वा महीपालः प्रियवाक्यैः शीलमतीं प्रतीति प्राह—हे पुत्रि जीवलोके त्वमेवैका धन्या वर्तसे, यस्या मनोरथा
अतः कारणात्त्वमेव स्त्रीरत्नं वर्तसे, यत्त्वया स्वकीयं शीलं रक्षितम्। पत्युराज्ञापि वि-
असंभाव्या अपि समस्ताः सिद्धिं प्राप्ताः।
हिता। ततस्त्वत्तुल्यापरा का नारी कथ्यते"। इत्यादिकां व्यावर्णनां विधाय यावता स महीपालः स्थितस्तावता तया वध्वा गदि-

पुत्रास्त्रयो दृश्यन्ते, वधूचतुष्टयं च दृश्यते, तत्किं कारणम् ?"। ततस्तेन महीपालेन नृपाग्रे लघुपुत्रस्य प्रवासवार्ता कथिता। तदा पुनरपि नृपेण पृष्टम्—'भो युष्मदागमनं कुतो बभूव ?'। इत्युक्ते तेन गदितम्—'स्वामिन् काञ्चनपुरात् समेतोऽस्मि'। इत्युक्ते पुनरपि राजा प्राह—'अहो कौटुम्बिकैषा कनिष्ठिका वधूर्मद्गृहे तक्रार्थं प्रेषणीया'। इति निगद्य राजा स्वमन्दिरं जगाम। तदा सर्वोऽपि जनः सविस्मयो जातः। "अयं स्वाम्येतावन्मात्रं केनापि सह न जल्पति, यावन्मात्रमेभिः सह जजल्प। एषां महद्भाग्यम्"। इतश्च श्वशुरादेशेन सा शीलमती गोरसार्थं नृपगृहे गता। तदा प्रतिहार्या नृपाग्रे विज्ञप्तम्—'स्वामिन्नेका कर्मकरस्त्री तक्रार्थं समेतास्ति। मध्ये मुञ्चामि ?'। तदा राज्ञोक्तम्—'मुञ्च' एतावता सा मध्ये मुक्ता। तदा राज्ञा श्रीमुखेन तां प्रतीति भणितम्—'हे भद्रे कथं तव कञ्चुक ईदृशो विद्यते ?'। तदानीं तया शीलमत्या लज्जावनम्रया किञ्चिन्न जल्पितम्। ततश्च राज्ञा तस्याः प्रचुरं गोरसं दापितम्। सा पुनः स्वस्थाने समागता। तदा श्वशुरेण तां प्रतीत्युक्तम्—"हे वत्से त्वं नवीनं कञ्चुकं परिधेहि। अन्यथा त्वं नृपावासे गता विगुप्यसे"। इति कथितेऽपि सा तद्वाक्यं न चक्रे। द्वितीयेऽपि दिने सा राजमन्दिरे तक्रार्थं गता। तदा नृपेणोक्तम्—'भद्रे अमुं नवीनं कञ्चुकं मम दत्तं गृहाण'। ततश्च सा तं वारं वारमगृह्णन्ती क्रुद्धेन महीभुजैवं बभाषे—'ममादेशमकुर्वन्त्यास्तव सुन्दरं न भावि'। इति गदिते साऽब्रवीत् "हे देव सुन्दरं भवतु वाऽसुन्दरं भवतु, पुनरहं निजनिश्चयखण्डनं न करिष्यामि। यतः—

आयातु यातु लक्ष्मीर्वा यत्तद्वा वदताज्जनः। जीवितं मरणं वास्तु सतां न्याय्यक्रियावताम् ॥१॥"

इत्युक्ते राज्ञा प्रोक्तम्—'रे जना इयं नारी गुप्तगृहे क्षिप्यताम्। असौ ममाज्ञाभङ्गं करोति'। इत्यादिष्टे नृपपौरुषैः

इति विचिन्त्यैकदा तत्पत्न्या तं प्रत्युक्तम्—'हे कान्त त्वं निश्चिन्त इव कथं निर्व्यापारस्तिष्ठसि ? ' । इत्युक्ते स बभाषे—" प्रिये किं करोमि ? मन्दभाग्यतया मम नृपसेवाकृषिक्रियादिव्यापाराः फलदा न भवन्ति " । पुनः पत्न्या भणितम्—" हे कान्त यद्यपि त्वं भाग्यहीनोऽसि, तथापि स्वोचितं कथमप्युपायं कुरुष्व । यदुक्तम्—

उद्यमे नास्ति दारिद्र्यं जपते नास्ति पातकम् । मौनेन कलहो नास्ति नास्ति जागरतो भयम् ॥१॥

अतः कारणादुद्यमो विधेयः । यतः—

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीर्दैवेन देयमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या, यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥१॥

तथा पुनः श्रूयताम्—हे प्राणेश वस्त्राभरणादिका शोभा दूरे तिष्ठतु, भोजनस्यापि वाञ्छा मम त्वत्प्रसादेन कदापि न पूर्णा । इमानि डिम्भरूपाणि भोजनार्थमनेकशो रुदन्ति, किं तानि वीक्ष्य तव चेतोऽपि न दूयते ? त्वयास्य नृपस्य सेवा पुरापि विहिता, परं तु ततस्तादृशं फलं न जातम् । अधुना कस्याप्यन्यस्य भूपस्य सेवा विधीयताम् । यत उक्तमस्ति—

गन्तव्यं नगरशतं विज्ञानशतानि शिक्षणीयानि । नरपतिशतं च सेव्यं स्थानान्तरितानि भाग्यानि ॥१॥"

तया भार्ययैवं भणितः सन् स व्याघ्रक्षत्रियः सेवावृत्तिसमुद्यतोऽभूत् । प्रायो गृहस्थानां गृहिणीवाक्यमनुल्लंघनीयं

तम्—" हे श्वशुर भवदीयाऽवगणना मम गुणास्पदं जाता । तथा यदि त्वं तदा ममापमानं नाकरिष्यः, हे तात तर्हि तवात्मजो देशान्तरे कथमगमिष्यत् ? तथा राज्यं कथमलप्स्यत ? भवतां गौरवं कथं व्यधास्यत् ? मम वाञ्छितं कथमपूरयिष्यत् ? " इत्युदीर्य सा स्थिता । तदा शूरपालनृपः सर्वान्मंत्रिसामन्तादीनुद्दिश्य प्रगल्भवचसेत्युवाच—" भो भो अयं मे जनकः । एते मदीया भ्रातरः । इयं मामकी माता । इमास्तिस्रोऽपि मद्भ्रातृजायाः । भो भोः सामन्तमंत्रिमुख्या एषां पूज्यानां प्रणामं कुरुत"। इत्युक्ते तैः सामन्ताद्यैस्तेषां प्रणामः कृतः । अथ राज्ञा सर्वेऽपि ज्येष्ठभ्रातरो भूरिदेशप्रदानेन मण्डलेश्वराश्चक्रिरे । यदुक्तम्—

नापकृतं नोपकृतं न सत्कृतं किं कृतं तेन । प्राप्य चलानधिकारान् शत्रुषु मित्रेषु बन्धुवर्गेषु ॥१॥

तथा मातापितरौ सगौरवं स्वसमीपे स्थापितौ । एवं कृतकृत्यतया स राजा निजराज्यं प्रतिपालयामास । एकदा तत्र पुरे श्रीश्रुतसागरसूरयः समागत्य नगराद्बहिरुद्याने तस्थुः । तदा तदीयचरणान्नमस्कर्तुं स्वपुरात् पुण्यवन्तं लोकं निर्यान्तं वीक्ष्य स राजा शूरपालः सचिवपार्श्वे इति पप्रच्छ—' हे मंत्रिन्निमे जनाः क्व यान्ति ? ' इत्युदिते सचिवः सूरिसमागमनं विज्ञापयामास । तदानीं भूपः प्राह—" यदीमे नगरवासिनो लोका ज्ञानभास्करं गुरुं वन्दितुं यान्ति, तर्ह्यस्माभिरपि गम्यते " । इति नृपवचः समाकर्ण्य तेन सचिवेनोक्तम्—' स्वामिन् युक्तमेतत् ' । इत्युक्ते स राजा पितृप्रियासमन्वितस्तत्र गत्वा तं सूरिवरं नत्वा तत्समीपे यथोचितस्थान उपविष्टः । एतावता सूरिभिः श्रीसर्वज्ञभाषितः संसारसमुद्रोत्तारणप्रवहणसमः श्रीमान् धर्मस्तस्य नृपस्याग्रे समाख्यातः । ततः प्रबुद्धः सन् राजा गुरुसंनिधौ श्राद्धधर्ममङ्गीकृत्य पुनरपि तं नमस्कृत्य स्वसदनं जगाम । ततश्च प्रतिदिनं स शूरपालनृपः श्रो-

निक्षिप्तपुंसा रसेनापूर्य तुम्बकं समर्पितम् । तच्चेष्टितं च कथितम् । कूपकंठगतः स व्याघ्रोऽपि तेन योगिना तुम्बकं याचितः । परंतु व्याघ्रो योगिनस्तन्नार्पयत् । तावता योगिना चिन्तितम्—' असौ साम्प्रतं बहिर्निष्कास्यते, पश्चादुपायेन मयायं वञ्चनीयः ' । इति ध्यात्वा तेन योगिना स कूपान्निष्कासितः । ततोऽनन्तरं तौ द्वावपि विवराद्बहिर्निर्गत्य ग्रामोपान्तमुपागतौ । तदानीं त्रिदण्डिना प्रोक्तम्—" भो भद्राथावयोर्मनोरथाः सिद्धाः । अनेन रसेन संसिक्तं लोहं वह्निना प्रज्ज्वाल्य सुवर्णं करिष्यते । त्वं निश्चिन्तो भव " । इत्युक्त्वा किञ्चिदग्रेतनं कनकं तत्करे समर्प्य स योगी प्राह—" वत्सानेन सुवर्णेन वस्त्रयुग्मं तथा प्रवराहारं ग्रामान्तर्गत्वा समानय, यथा भोजनमावाभ्यां क्रियते । वस्त्रमप्येकं तव द्वितीयं मम भविष्यति । यतो धनस्येदमेव प्रथमं फलं, यद्दीयते तथा भुज्यते " । इत्युक्ते व्याघ्रेणापि चिन्तितम्—" निश्चयेनैष योगी मम हितकारकोऽस्ति । अन्यथा स्वकीयं कनकं मम कथं समर्पयति ? " । इति ध्यात्वा रसतुम्बकं योगीन्द्रसमीप एव विमुच्य निष्कपटः सन् ग्राममध्ये गत्वा मंडकादि प्रवरं भोज्यं कारयित्वा घटकर्परयोस्तन्निक्षिप्य वस्त्राण्यपि समादाय यावत्स ग्रामाद्बहिरागत्य यत्र योगी मुक्तोऽभूत्तत्र प्रदेशे समागतः, तावता स योगी रसतुम्बकं गृहीत्वा तं व्याघ्रं वञ्चयित्वा क्वापि नष्टः । तदा व्याघ्रेण तं तदाऽदृष्ट्वेति चिन्तितम्—" अहो तेन दुष्टयोगिना मुष्टोऽस्मि । यदुक्तम्—

**मित्रद्रोही कृतघ्नश्च स्नेही विश्वासघातकः । ते नरा नरकं यान्ति यावच्चन्द्रदिवाकरौ ॥ १ ॥**

इति निगद्य भोजनपात्रे तथा वस्त्राणि भूमौ विमुच्य मूर्छया पपात । ततः परं लब्धसंज्ञ एवं जगाद—" हे दैवास्मिञ्जगति मत्सदृशोऽन्यः कोऽपि कथं नास्ति ? यतस्त्वयाहमेव सर्वदुःखानां भाण्डारिकः कृतः ? । आदौ मम निर्धनतादुःखं जातम् ।

भवति । ततश्च स व्याघ्रो ग्रामान्तरे गन्तुकामः सन् कस्यापि वणिजोऽग्र इति समाचख्यौ—" भो मम गृहिणी यद्याचते, तत्त्वया मदीय उध्धारके देयम् । अहं राजसेवया धनं समुपार्ज्येहागत्य त्वदीयं सर्वमपि दास्यामि । स्वभार्याया वाञ्छां पूरयिष्यामि "। इति निगदिते तेन वणिजा आमेति भणितम् । ततः किञ्चित्पाथेयमादाय शुभमुहूर्ते वस्त्रशस्त्रादिसामग्रीं विधाय स गृहान्निर्ययौ । क्रमेण शंखपुराभिधं पुरं गत्वा सेवकवत्सलस्य सूरसेननृपस्य सेवां कर्तुं प्रारेभे । तेन नृपेण स वचसा भृशमाह्लादितः । अतः कारणात्सादरं व्याघ्रो धनाशया तत्सेवां चकार । कियद्भिर्वासरैः सर्वमपि शस्त्रवस्त्रादिकं विक्रीय भक्षितम् । कियद्धनं गृहीतमभूत्तदपि तेन भक्षितम् । वर्षं यावद्ग्रासं विनापि सेवा कृता । परं तस्मान्नृपतेः किमपि फलं न जातम् । तदा स विषादपर एवं विचिन्तयामास—" असौ राजा पूर्वमुदारवचनो भूत्वा पश्चादसारवचनो जातः । यत उक्तम्—

असारस्य पदार्थस्य प्रायेणाडम्बरो महान् । न हि तादृग्ध्वनिः स्वर्णे यादृशः कांस्यभाजने ॥१॥

अतः कारणात्केचिद्वचनशूरा एव भवन्ति, परं तु कर्तव्यशूरा न भवन्ति । यतः शास्त्र उक्तम्—

अदातरि समृध्धेऽपि किं कुर्वन्त्युपजीविनः । किंशुके किं शुकः कुर्यात्फलितेऽपि बुभुक्षितः ॥ १ ॥"

इति ध्यात्वा पुनरपि स चिन्तयति स्म—" अस्मात्कृपणनृपसेवनान्मम कर्षणं वरम् । यदुक्तम्—

लक्ष्मीर्वसति वाणिज्ये किंचित्किञ्चिच्च कर्षणे । अस्ति नास्ति च सेवायां भिक्षायां न च नैव च ॥१॥

च यत्त्वया पुरा भवे परवित्तापहारो विहितः, ततः कारणात्तव धनप्राप्तिर्न बभूव । यदुक्तम्—

अदत्तभावाद्धि भवेद्दरिद्री, दरिद्रभावाच्च करोति पापम् ।
पापं हि कृत्वा नरकं प्रयाति, पुनर्दरिद्री पुनरेव पापी ॥ १ ॥

कदापि यदि धनसम्पत्तिर्जाता, तर्हि गता । परं तव गृहे न स्थिता । अधुना तु सुपात्रदानप्रभावेण हे राजंस्तव पुनर्लक्ष्मीरप्यागता । राज्यमपि संजातम् । यदुक्तम्—

सुपात्रदानेन भवेद्धनाढ्यो, धनप्रयोगेण करोति पुण्यम् ।
पुण्यप्रभावेण जयेच्च स्वर्गं, स्वर्गे सुखानि प्रगुणीभवन्ति ॥ १ ॥"

इति श्रुत्वा स प्रतिबोधं प्राप्य सूरिं नत्वा गृहे गत्वा स्वसुतं राज्ये संस्थाप्य तस्यैव गुरोः समीपे दीक्षां गृहीत्वाऽन्ते समाधिना मृत्वा देवलोकं प्राप्य ततश्च्युत्वा मनुजत्वं संप्राप्य मोक्षं प्राप्स्यति ॥

॥ इति सत्पात्रदानविषये व्याघ्रकथा ॥ १३ ॥

अथेमां व्याघ्रकथां कथयित्वा स्वामी श्रीशान्तिजिनश्चक्रायुधनृपं प्रति प्राह—" हे राजन्निमानि द्वादशापि व्रतानि गृहस्थानां प्रोक्तानि सन्ति । विवेकी गृहस्थस्तानि प्रतिपाद्य प्रान्ते संलेखनां कुर्वीत । एवं गृहस्थधर्मं समाराध्य यः सुधीः प्रव्रज्यां

ततः सेवापि निष्फलाभूत् तदनन्तरं रत्ननाशो बभूव । ततश्च कनककृद्रसोऽपि गतः । मयि केवलं दुःखपरम्परैव स्थिता । अतः कारणान्मम मरणमेव वरम् " । इति विचिन्त्य यावता स वटवृक्षोपरि चटित्वा तच्छाखायां दवरिकां बध्वा कण्ठपाशं कर्तुं समुद्यतस्तावता मासोपवासिनमीर्यासमितितत्परं पारणार्थं ग्रामसमीपे समागच्छन्तं मुनिमेकं समालोक्य स इति व्यचिन्तयत्—" वटात्समुत्तीर्य प्रासुकं चेदं भोज्यवस्त्रदानमस्मै मुनीश्वराय यदि प्रयच्छामि, तर्हि मम जन्मान्तरे तत्प्रसादेन सुखं स्यात् " । इति विमृश्य तस्माद्वटतरोः समुत्तीर्य तं मुनिप्रवरं प्रणिपत्य स तं प्रति तद्भोज्यं तथा वस्त्राणि ढौकयित्वेत्युवाच—' प्रभो प्रसादं कृत्वैतदशनवसनादिकं गृह्यताम् ' । इत्युक्ते स मुनिर्द्विचत्वारिंशद्दोषविवर्जितं तन्निरीक्ष्यैकतः कर्परादशनं जग्राह । कल्पनीयं वस्त्रद्वयमपि गृहीतवान् । ततस्तेन तं पुनः प्रणम्य स विसृष्टः स्वस्थानं गतः । व्याघ्रः स्वचित्त इति दध्यौ—" अहं धन्यः, यस्मान्ममेदृशः संयोगो जातः । भाग्यं विनेदृक्शशनवसनप्राप्तिः कुतः ? । तथा सामान्यग्राम ईदृशी साधुसंपत्तिः क्व ? । तथा मम विवेकविकलस्य दानवासना कुतः स्यात् ? । अतः कारणान्मम जन्मन एतदेव सारम् " । स शुभधिया यावदित्थं चिन्तयति स्म, तावद्वटवासिनी काचिद्देवता तं प्रतीति प्रोचे—" भो वत्स मुनिदानप्रभावेणाहं तव तुष्टास्मि । कथय, किमभीष्टं करोमि ? " । इत्युक्ते स व्याघ्रोऽवादीत्—" यदि कापि देवी त्वं मम तुष्टासि, तर्हि पारिभद्रपुरस्य राज्यं देहि । तथा द्रव्यं देहि " । इत्युक्ते पुनर्देवी प्राह—" भो महापुरुष तव सर्वमेतद्भविष्यति । परं तु साम्प्रतमिदं भक्ष्यं भुंक्ष्व, प्राणाधारं कुरु " । तदा स देवतादेशं प्राप्य प्रमुदितचेतसा भोजनं विधाय चीवरे परिधाय यावत्तत्र स्थितोऽस्ति, तावद्देवताप्रभावेण स एव कपिर्वनान्तरादेत्य तस्याग्रे रत्नकन्थां विमुच्य पुनः काननान्तर्गतः । तथा च पुण्ययोगेन रसतुम्बकमादाय स योग्यपि तत्रायायौ । ततश्च तेन योगिना रससिद्धितः सुवर्णं निष्पाद्य व्याघ्र-

वान् रत्नाकरनामा श्रेष्ठी बभूव । अगण्यपुण्यलावण्यनैपुण्यदाक्षिण्यविभूषिता तत्पत्नी सरस्वतीनाम्नी संजज्ञे । एकदा सा सरस्वती पाश्चात्यरजन्यां स्वप्नमध्ये महातेजसाढ्यं तमिस्रोद्योतविधायकं रत्नमेकं करस्थितं दृष्ट्वा जागरूका सती भर्तुरग्रे कथयामास । तदा स प्रियतमः प्रियावाक्यं श्रुत्वेति शशंस—'हे प्रिय एतत्स्वप्नप्रभावेण तव पुत्रो भविष्यति' । इत्युक्ते सा महर्षिता । क्रमेण परिपूर्णसमये शुभलक्षणसंयुक्तं पुत्रं सा सुषुवे । ततश्च स्वप्नानुसारेण तस्य रत्नचूड इति नाम संस्थापितम् । ततः पञ्चवर्षानन्तरं जनकेन लेखशालायां विमुच्य स कलाभ्यासं कारितः । क्रमेण यौवनं प्राप्तः । एकदा स विचित्रशृङ्गारमलङ्कृत्य प्रवरं वेषं दधानः समानैर्मित्रैः सह नगरोपवनादिषु स्वेच्छया रमते, विलासं करोति । तत्र स रत्नचूड एकस्मिन् समये चतुष्पथे लीलया गच्छन्नस्ति, तदा तेन संमुखमागच्छन्ती नृपप्रसादपात्रं सौभाग्यमञ्जरी वेश्या रभसतया कथञ्चनांसे पीडिता । तदा तया वेश्यया तं वस्त्राञ्चले धृत्वा सकोपं सोपहासं चोक्तम्—

" हंहो वाक्यमिदं सत्यं वदन्त्यत्र विपश्चितः । धनेनानेकमूकत्वं यद्भवेत् पश्यतोऽपि हि ॥१॥

यस्त्वं दिवापि बालोऽपि विपुलेऽपि चतुष्पथे । न मामभिमुखं स्वस्यागच्छन्तीमपि पश्यसि ॥२॥

अयं धनमदः किं तु तव कर्तुं न युज्यते । येनेदमपि नीतिज्ञाः प्रवदन्ति मनीषिणः ॥ ३ ॥

पित्रोपार्जितवित्तेन विलासं कुरुते न कः । स श्लाघ्यो यः स्वयं लक्ष्मीमुपार्ज्य विलसत्यहो ॥४॥

तथा नीतिशास्त्र इत्युक्तम्—

गृह्णाति । एषा शुद्धा संलेखना सिद्धान्ते प्रोक्ता । अथैकादश श्राद्धप्रतिमा दर्शनादिकाः कुर्यात् । तासां प्रतिमानामभावे संस्तारकस्थितो दीक्षां कुर्यात् । तदनन्तरं प्रवर्धमानशुभपरिणामेन गुरुचरणान्तिके त्रिविधं वा चतुर्विधं प्रान्तेऽनशनं गृहीत्वा गुरोर्मुखादाराधनाग्रन्थान् शृणोति । तथा निजमानसे निर्मलं संवेगरङ्गमानीय शुद्धमनसा भव्यजीवेनामी पञ्चातिचारा अत्र संलेखनायां वर्जनीयाः । अर्थतो नामतश्च तांस्तवाग्रे कथयामि—आद्यस्तावदिहलोकाशंसाप्रयोगनामा 'अहं मनुष्यभवं प्राप्नोमि, तर्हि भव्यं' इति चित्ते चिन्तयति, स प्रथमोऽतिचारः । द्वितीयः परलोकाशंसारूपः 'मम प्रकृष्टो देवलोको भूयादिति' चिन्तनं, स द्वितीयोऽतिचारः । तृतीयो जीविताशंसाप्रयोगः पुण्यार्थिभिः स्वस्य महिमानं क्रियमाणं दृष्ट्वा यज्जीविताशा जायते, स तृतीयोऽतिचारः । चतुर्थो मरणाशंसाप्रयोगनामा, अनशने गृहीते सति क्षुधापीडितस्य मरणाभिलाषो जायते, स चतुर्थोऽतिचारः । पञ्चमश्च कामभोगाशंसाप्रयोगनामा, शब्दरूपरसस्पर्शगन्धानां कामनारूपः पञ्चमोऽतिचारः । संलेखनाविषये पुरापि दृष्टान्तः कथितः । सुलसस्य कथायां यो जिनशेखरश्राद्धः प्रोक्तः स संलेखनादृष्टान्तो ज्ञेयः "। एवं संलेखनायुक्तं श्रीशान्तिजिनभाषितं धर्मं समाकर्ण्य समग्रापि सा सभा पीयूषसिक्तेव बभूव । अत्रान्तरे समुत्थाय चक्रायुधनृपः प्रभुं प्रणिपत्याञ्जलिं कृत्वेति विज्ञापयामास—

समस्तसंशयध्वान्तनिर्नाशनदिवाकर । त्रैलोक्यवन्दित श्रीमन् शान्तिनाथ नमोऽस्तु ते ॥ १ ॥

दुष्कर्मनिगडान् भंक्त्वा रागद्वेषौ तथा अरी । भवगुप्तगृहात्त्वं मामरं निष्कासय प्रभो ॥ २ ॥

शश्वज्जन्मजरामृत्युवह्निदीप्ताद्भवौकसः । दीक्षाहस्तावलम्बेन निस्तारय जिनेश माम् ॥ ३ ॥

भिर्विसृज्य स्वगृहेषु निन्ये । ततश्च स श्रेष्ठिपुत्रः सद्वस्त्राणि परिधाय शृङ्गारालङ्कारसमन्वितः पदातिपरिवृतः पुरस्यान्तराऽन्यायजूपार्तिं द्रष्टुं प्रचलितः । अत्रान्तर एकः कारुकः प्रवरमुपानद्युगलं स्वर्णरूप्यरचनया मण्डितं समानीय तस्योपढौकयामास । तदा तेन व्यवहारिणा तदुपानद्युग्मं गृहीत्वा तस्य प्रोक्तम्—'भोः किं प्रार्थयसि ?' । तदा तेन प्रवहणं याचितम् । तदा रत्नचूडेन चिन्तितम्—'असावघटमानं प्रजल्पति' । तथा च तस्मै ताम्बूलं दापयित्वेत्युक्तम्—'भोः कारुकाहं त्वां हृष्टं करिष्ये' । इति निगद्य तं विसृज्य स व्यवहारी यावदग्रतो गतस्तावत् कश्चिदेकाक्षो द्यूतकारस्तं श्रेष्ठिसुतं प्रतीति प्राह—"भो मया द्रव्यसहस्रेण स्वनेत्रं त्वत्पितुः पार्श्वे ग्रहणके मुक्तमस्ति । सांप्रतं त्वं तद्धनं गृहीत्वा मदीयं लोचनं समर्पय" । इत्युक्त्वा तेन तस्य द्रविणं प्रदत्तम् । तदा तेन रत्नचूडेन चिन्तितम्—"असावघटमानं प्रजल्पति । तथापि वणिजा चिन्तितं वित्तं स्वायत्तं करोमि । पश्चाद्युक्तं करिष्ये" । एवं विचिन्त्य तद्द्रविणं समादाय श्रेष्ठिपुत्रेणैवं प्रत्युत्तरः कृतः—'भोः क्षणान्तरेणाहं समेष्यामि, तदा त्वया मदीयावासे समागन्तव्यम्' । ततश्च पुरस्तं श्रेष्ठिसुतं गच्छन्तं दृष्ट्वा चत्वारो धूर्तनराः परस्परमेवं जजल्पुः । तन्मध्य एकः प्राह—"समुद्रस्य नीरमानं तथा गङ्गायाः सिकताप्रमाणं ये बुद्धिमन्तो भवन्ति ते जानन्ति । पुनः स्त्रिया हृदयं न जानन्ति" । इत्युक्ते द्वितीयः प्राह—"भोः केनापीत्युक्तिः प्रजल्पिता । यथा स्त्रीहृदयं कोऽपि न वेत्ति, तथैतदपि द्वयं न कोऽपि वेत्ति" । अथ तृतीयः स्माह—"इदं पूर्वसूरिसुभाषितं नन्वसत्यम् । परं शुक्रगुरुप्रमुखैः कैश्चिद्विज्ञायतेऽप्यदः" । अथ चतुर्थः प्राह—'ताम्रलिप्त्याः समागतो बालरूपोऽप्येष सर्वमेतद्विजानाति' । तदान्योऽवदत् "भो गङ्गानदी दूरे वर्तते, परं तु त्वं सांप्रतं नीरस्यैव मानमनेन कारय" । एवं तैरन्योऽन्यं हठाद्विवादं कृत्वा धूर्तविद्यया तस्मिन्नर्थे स श्रेष्ठिपुत्रस्तथा प्रोत्साहितः, यथा स तत्कार्यं प्रति-

मातुः स्तन्यं पितुर्वित्तं परेभ्यः क्रीडनार्थनम् । पातुं भोक्तुं च लातुं च बाल्य एवोचितं यतः॥१॥

तथा चोक्तम्—

सोलसवरिसो पुत्तो लच्छिं भुंजेइ जो पियजणस्स। सो रणरूवे पत्तो पुत्तो सो वयररूवेण ॥१॥

ततः श्रेष्ठिसुतं प्रत्येवमुक्त्वा सा गणिका स्वस्थानं ययौ । ततश्च श्रेष्ठिपुत्रस्तदीयं वाक्यं श्रुत्वेति व्यचिन्तयत्—" अहो अस्या वचनं सत्यं, नूनं मया करणीयम् । यतः—

बालादपि हितं ग्राह्यममेध्यादपि काञ्चनम्। नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि ॥१॥

इति नीतिनिपुणं वाक्यं स्वहृदये चिन्तयन् स सविषादः सन् यदा स्वसदनं समाययौ, तदा तत्पिता निजाङ्गजं सविषादं दृष्ट्वा प्राह—" हे वत्साद्य वक्त्रविच्छायता तव सचिन्तत्वं कथयति । अतः कारणाद्वद, भवतः किं विलोक्यमानमस्ति ? किञ्चिन्न्यूनमस्ति, यत्तव प्राणवल्लभस्य सुतस्य पूरयामि " इत्युक्ते किञ्चिद्विहस्य स रत्नचूडपुत्रः पितरं प्रतीति प्रोक्तवान्—" हे ताताहं द्रव्योपार्जनहेतवे त्वदादेशेन देशान्तरं गन्तुमिच्छामि, ममादेशः प्रदीयताम् " । ततः पुनः पित्रा रत्नाकरेण भणितम्—" हे पुत्र स्वगृहेऽत्रेऽपि धनं बहुतरं विद्यते । तेन धनेन स्वसमीहितं पूरय । तथा शृणु—

देशान्तरोऽतिविषमो गन्तुं शक्योऽतिकर्कशैः । सुकुमारतनुस्त्वं तु कथं तत्र गमिष्यसि ॥ १ ॥

दित्वा सोऽपि जगाम । एतावता ते चत्वारोऽपि धूर्तनरास्तत्रागत्य स्वां वार्तां यमघण्टायाः पुरतः कथयामासुः । तदा तयाऽक्कया गदितम्—" भवतामपि प्रपञ्चेन किञ्चित्फलं न पश्यामि । अयमपि कूटप्रबन्धः स कथयिष्यति—मया समुद्रनीरस्य मानं करिष्यते, परं तु भवद्भिर्निम्नगानीरं पृथक्क्रियताम् । इति समाख्याते भवतां नदीजलपृथक्करणे किं समर्थताऽस्ति ? " । तैरुक्तम्—'न हि'। तदा तया जगदे—' तर्हि युष्माभिर्निर्बुद्धितया सर्वस्वमपि हारितम् ' । इति श्रुत्वा तेऽपि स्वस्थानमगमन् । तदानीं श्रेष्ठिनन्दन एवंविधानि तद्वाक्यानि श्रुत्वा गुरुवाक्यवत्स्वचित्तेऽवधार्य प्रमुदितः । तदनन्तरं स ततः स्थानादुत्थाय रणघण्टया सह तद्वेश्मनि गत्वा तां चानुज्ञाप्य स्वस्थानं समियाय । ततश्च कुट्टिनीप्रोक्तबुद्ध्या स रत्नचूडः सर्वाण्यपि कार्याणि साधयामास । भाण्डग्राहिवणिक्समीपतो लक्षचतुष्टयमात्रं धनं जग्राह । तथा समुद्रजलमानकारिभ्यो लक्षचतुष्टयं जग्राह । तेन व्यतिकरेण स समग्रेऽपि पुरे विख्यातोऽभूत् । एकदा स उपायनं गृहीत्वा नृपसमीपे ययौ [ प्रणामं कृत्वोपविष्टः । तदा भूभुजा समस्तोऽपि समाचारस्तस्य पार्श्वे पृष्टः । तदा तेन स्ववृत्तान्तः समग्रोऽपि नृपाग्रे निगदितः । तदानीं भूपतिः सविस्मयः सन्निति वभाषे—" अहो अस्य पुरुषस्याद्भुतं माहात्म्यं, येनास्मन्नगरवासिनो लोकाद्धनमुपाददे " । इति विचिन्त्य नृपतिः प्राह—' भो वणिक्पुत्राहं तव तुष्टोऽस्मि, कथय, किं तव समीहितं करोमि ? ' । इत्युदिते स रत्नचूडः प्राह—' राजन् यदि तुष्टोऽसि, तर्हि रणघण्टाभिधानां गणिकां मम देहि' । इत्युक्ते नृपादेशेन सा गणिका तदीया गेहिनी जाता । ततश्च स रत्नचूडस्तत्कृते प्रभूताभरणानि कारयित्वा स्नेहतस्तस्या ददौ । ततश्च स श्रेष्ठिपुत्रः प्रभूतं लाभमुपार्ज्य क्रयाणकमुपादाय स्वकीयं यानं संपूर्य स्वस्थाने गन्तुकामः सन् प्रवहणमारुह्य क्रमेण महोदधिं समुत्तीर्य तया रणघण्टया स्त्रिया सह स्तोकैरेव दिनैः पुनः स्वां नगरीं यदा समाययौ, तदा केनापि पुंसा पुरो गत्वा श्रेष्ठीति

श्चिद्बालोऽपि बुद्धिमान् भवति । कश्चित्तथा वृद्धोऽपि बुद्धिविकलो भवेत् । अन्यच्च सर्वः कोऽपीत्थं जानाति यदिदं पत्तनं धूर्तजन-
पूरितमस्ति । अतः स एवात्र समायाति, यस्य संपूर्णं बुद्धिबलं भवति । तथा च भवतां लाभे संजाते सति ममापि लाभः स्यात् ।
परं व्यर्थमनोरथैरयमात्मा न प्रीणनीयः " । इति वाक्यविचारं श्रुत्वा ते स्वस्थानं ययुः । अथ स कारुकः शिल्पी समाययौ । दूर
उपविश्य हर्षितः सन् स इत्युवाच—" हे अक्काधास्मिन्नगरे वैदेशिक एको वणिक् समागतोऽस्ति । मया तस्य मनोहरमुपानद्युगलं
मद्दत्तमस्ति । तेन ममाग्र इत्थं प्रोक्तमस्ति भोस्त्वां महर्षितं करिष्यामि । इति वचनात्तदीये सर्वस्वे गृहीते मम महद्धता भविष्यति,
नान्यथा । अहमिति वार्तां त्वदग्रे कथयितुं समेतोऽस्मि । यतस्तत्र लाभे तवापि भागो भावी " । इत्युक्तेऽक्कया गदितम्—" रे
कारुक स्वानुरूपो मनोरथः कार्यः । परं तु विसदृशो न विधेयः । स नरेन्द्रपुत्रोत्पत्तिं निवेद्य यदा तव कथयिष्यति 'भोस्त्वं हृष्टो
वा न हृष्टः ? ' तदा त्वं किं कथयिष्यसि ? " । इत्युक्ते सोऽपि मुखं लात्वा स्वस्थानं गतः । तावत्तैकाक्षो द्यूतकारः समाययौ ।
सोऽप्यात्मधूर्ततावार्तां कुट्टिन्या अग्रे समाख्यातवान् । तदा यमघण्टा विहस्य प्रोचे—" अहो तवापि कार्यरचना कूटैव दृश्यते ।
तथा त्वया प्रथममेव द्रविणं दत्तं, तद्द्रव्यं न कृतम् " । इत्युक्ते स प्राह—' मया तदीयद्रव्यग्रहणाय मण्डनं सत्यङ्काररूपं मद-
त्तमस्ति ' । अथ कुट्टिनी प्राह—' भोस्तन्मण्डनं केनापि हर्तुं न शक्यम् ' । एवं गदिते द्यूतकृत्प्राह—' स मद्ग्रहात्कथं त्रुटि-
ष्यति ? ' । इति वाक्ये प्रोक्ते पुनर्यमघण्टया प्रोचे—" स इत्थं कथयिष्यति मम समीपे बहूनि लोचनानि ग्रहणके सन्ति । अ-
तस्त्वदीयं द्वितीयं लोचनं समानय, यथा तोलनयंत्रे क्षिप्त्वा यत्तुल्यं लोचनं भवति, तद्भवतो ददामि, अन्यथा न ज्ञायते इत्युक्ते
त्वं किं करिष्यसि ? " । तदा द्यूतकाराऽवादीत्—' हे अम्बेदृशं बुद्धिकौशलं तव समीपेऽस्ति, परं तत्समीपे कुतः ? ' । इति ग-

उत्तरप्रत्युत्तरप्रदाने प्रवीणास्ति । तेषां सर्वमपि कपटशिक्षादिकं सैव प्रयच्छति । अतः कारणादहं तस्या यमघण्टायाः समीप आत्मना सह त्वां नेष्यामि । तत्रोपविष्टः संस्त्वमपि तदीयां वार्तां श्रोष्यसि ” । इति निगद्य स्त्रीवेषं विधाप्य तया रणघण्टया तदौदार्यप्रमुदितया सत्या रजन्यां स व्यवहार्यक्कासमीपे नीतः । तदानीं सा प्रणामं कृत्वा मातुः समीप उपविष्टा । तदा मात्रा भणितम्—‘ वत्से त्वत्सार्थे एषा का बाला समागतास्ति ? ’ । तदा तया प्रोक्तम्—“ हे अक्केयं श्रीदत्तश्रेष्ठिनः पुत्री रूपवती नाम्नी मम प्राणवल्लभा सखी वर्तते । एकवारमेषा मम नगरमध्ये मिलिता, तदा मया स्वमन्दिर आकारिताभूत् । अतः कारणादियं किञ्चिन्निमिषान्तरं कृत्वा स्वगृहान्निःसृत्य मम मिलनाय समागता । ततो मयाऽत्र समानीता ” । इति निगद्य यावता सा स्थिता, अत्रान्तरे चत्वारोऽपि ते वणिजस्तस्याः कुट्टिन्याः समीपे समाजग्मुः , यैः समस्तमपि क्रयाणकं रत्नचूडव्यवहारिणो गृहीतमस्ति । ते तत्रागत्य यथोचितस्थान उपविष्टाः तदा तयाऽक्कया कथितम्—‘ भो वणिजोद्य किमपि प्रवहणं मया समायातं श्रुतम् ’ । इत्युक्ते तैर्भणितम्—‘ हे अक्क स्तंभतीर्थवासी वणिक्पुत्र एकः समागतोऽस्ति ’ । पुनः सा प्राह—‘ तस्मिन् समागते भवतां कोऽपि लाभो जातो वा न जातः ? ’ । इति प्रोक्ते तैः क्रयाणकग्रहवार्ताऽक्काग्रे निगदिता । तदा पुनः कुट्टिन्या भणितम्—‘ अहो अनेन प्रकारेण भवतां हानिः , नो लाभः ’ । तदा तैः पृष्टम्—‘ हानिरस्माकं कथं स्यात् ? ’ । इति पृष्टे पुनरपि सावादीत्—“ भवद्भिरित्थं प्रोक्तमस्ति—‘ त्वदिष्टवस्तुनास्माभिः प्रवहणं पूरणीयं ’ नूनमिच्छाऽनेकरूपा स्यात् । यदि स कथयिष्यति, ममेदृशीच्छास्ति मशकास्थिभिरेव प्रवहणं परिपूर्य दीयताम्, तदा युष्माभिः किं करिष्यते ” । इत्युक्ते ते प्रोचुः—“ तस्येदृक्स्वरूपो बुद्धिप्रपञ्चो न भविष्यति । यतोऽसौ बालको मुग्ध एवास्ति ” । तदाकर्ण्य कुट्टिनी ऽऽह—“ बालोऽस्तीति कथयित्वा नावगणनीयः । क-

पन्नवान्। तदा पुनरपि तैरुक्तम्—" भोः श्रेष्ठिपुत्र यदि त्वमेवं करिष्यसि, तर्हि समग्राप्यस्मदीया लक्ष्मीस्तवैव। चेन्न विधास्यसि, तर्हि वयं चत्वारोऽपि त्वदीयं धनं ग्रहीष्यावः"। इत्युक्त्वा तैस्तेन श्रेष्ठिपुत्रेण सह निश्चयार्थं कराहतिर्विदधे। रत्नचूडोऽपि तत्कृत्वा पुरो गच्छन्निति चिन्तयामास—" मम पित्रा यादृग्जनो निगदितोऽभूत्, अस्मिन् पुरे सर्वः कोऽपि तादृश एवास्ति। एतेषां कार्याणां निर्वाहः कथं भविष्यति?। अथवाहं तावद्भण्डघण्टागणिकागृहे यामि। यतः साऽनेकमनुष्याणां चित्तरञ्जनं करोति। विविधोपायान् जानाति। कामपि बुद्धिं सा ममापि दास्यति"। एवं विचिन्त्य स श्रेष्ठिसुतस्तत्र गणिकागृहे गतः। तावता तयाऽभ्युत्थानक्रियाप्रभृतिकं स्वागतं कृत्वा बहुमानपूर्वकमासनप्रतिपत्तिरपि कृता। तदा तेन व्यवहारिणा तत्कितवार्पितं धनं तस्याः प्रदत्तम्। तदा सा विशेषेण प्रहृष्टा सती अभ्यङ्गोद्वर्तनस्नानभोजनादि सगौरवं तस्य कारयति स्म। एतावता सन्ध्याकालो जातः। तदा स श्रेष्ठिसुतस्तस्या गणिकाया गृहे मनोहरे शयनीय उपविष्टः। तस्याग्रे सारशृङ्गारमनोहरा सा गणिका यावत्तेन सह विचक्षणोचितां गोष्ठीं कर्तुमारेभे, तावच्छ्रेष्ठिसूनुना तस्या अग्रे स्वां वार्तां समाख्यायेत्यूचे—" हे सुलोचने त्वं तावदत्रवास्तव्या स्वपुरचेष्टितं जानासि। कथय। एतेषां विवादानां मया कथञ्चित्प्रत्युत्तरः कार्यः। अस्मिन् कार्ये निर्वाहिते सत्यहं त्वया सह रङ्गवार्तां करिष्यामि। अधुना पुनः सचिन्तोऽस्मि"। इति गदिते सा धीमती तं प्रत्यूचे—" भोः सुन्दर कारणं शृणु—दैवयोगाद्यः कश्चिद्व्यवहार्यत्र नगरे समायाति, स एतैः सर्वैर्वञ्चनातत्परैः संमील्य सर्वस्वं गृह्यते। ततः परमुपात्तवित्तस्यैकोऽंशो महीपतेर्दीयते, द्वितीयो विभागः सचिवस्य, तृतीयो विभागः श्रेष्ठिनः, चतुर्थांश आरक्षकस्य, पञ्चमांशः पुरोहितस्य, षष्ठांशो मम मातुर्यमघण्टाया दीयते। तथा सर्वोऽपि करणाचारः सर्वैरपि तस्या अग्रे विधीयते। सा मम जनन्यतिप्राज्ञा वर्तते।

वह्निनापि न सिध्यन्ति यथा कंकटुकाः कणाः । तथा सिद्धिरभव्यानां जिनेनापि न जायते ॥२॥

यथोखरक्षितौ धान्यं न स्याद्वृष्टेऽपि नीरदे । बोधो न स्यादभव्यानां जिनदेशनया तथा ॥ ३ ॥

यत्र यत्र जनपदे श्रीशान्तिजिनपतिर्विहारं चकार, तत्र सर्वदुरितोपशान्तिर्जनानां संजाता । तथा मनुविहारयोजनशतमध्ये दुर्भिक्षमरकादिकं जनोद्वेगकारकं न बभूव । तथा पञ्चविंशतियोजनमध्ये वृक्षाः पुष्पफलाकुला अभूवन् । तथा वसुधा सुखसंचरा जाता । एवंविधं श्रीजिनमाहात्म्यं विश्वविस्मयविधायकं वर्तते । तस्य व्यावर्णनमस्मादृशैस्तुच्छबुद्धिभिः कियद्विधीयते ? । यः पल्योपमायुष्यको भवति, यस्तु सहस्रजिह्वो भवेत्, स कदाचिज्जिनगुणान् वर्णयति, नापरः । --

विजानाति जिनेन्द्राणां को निःशेषगुणोत्करम् । त एव हि विजानन्ति दिव्यज्ञानेन तं पुनः ॥१॥

असितगिरिसमं स्यात्कज्जलं सिन्धुपात्रे, सुरतरुवरशाखा लेखिनी पत्रमुर्वी ।

लिखति यदि गृहीत्वा शारदा सर्वकालं, तदपि तव गुणानामीश पारं न याति ॥ २ ॥

एवंविधो भगवान् श्रीशान्तिजिनेश्वरः समस्तभव्यजन्तूनां हिताय धरापीठे विहारं चकार । तथा च तेन चक्रायुधगणभृता जानतापि भव्यजीवानां प्रतिबोधाय भगवत्पार्श्वेऽनेकशः पृच्छाः कृताः । सर्वा अपि स्वामिना निगदिताः । अमुना प्रकारे-

अन्यायभूपतिर्मोहो भाण्डागारिवणिक्समाः । कषायास्तत्र चत्वारो विवेकधनहारिणः ॥ ६ ॥
विषयाशा च वेश्येव साक्षात् कर्मपरीणतिः । सा च पूर्वभवकृता जन्तोः सुमतिदायिनी ॥ ७ ॥
उल्लंघ्य सर्वमशुभं तत्प्रभावेण देहभृत् । पुनरानीयते धर्ममार्गे जन्मक्षिताविव ॥ ८ ॥
इत्याद्युपनयः सर्वो यथायोगं मनीषिभिः । करणीयो विशेषेण धर्मपुष्टिविधित्सया ॥ ९ ॥

॥ इत्यन्तरङ्गविषये रत्नचूडकथा ॥

प्रथमगणधरेण श्रीसंघस्य पुरत एवंविधां धर्मदेशनां कृत्वा या स्वयं विरचितास्ति, सा द्वादशाङ्ग्यपि निगदिता । तथा तेन श्रुतज्ञानधरेण गणभृता साधूनां दशविधा सामाचारी प्रकाशिता । समग्रमपि साधुकृत्यं प्रकटीकृतम् ॥

ततश्च श्रीशान्तिजिनस्ततः स्थानान्महीतले विजहार । भव्यांभोजवनं सूर्यवन्नित्यं स्वामी प्रबोधयामास । केचिज्जना भगवत्समीपे दीक्षां जगृहुः । केचिच्छुभवासनया श्राद्धधर्मं प्रपेदिरे । केचन जीवा अविरतसम्यग्दृष्टयो बभूवुः । केचिज्जीवा भगवत्प्रतिबोधेन भद्रकत्वं प्राप्ताः । तथा चोक्तम्—

सर्वस्यापि तमो नष्टमुदिते जिनभास्करे । कौशिकानामिवान्धत्वमभव्यानामभूच्च तत् ॥ १ ॥

विदधे । यतः पूर्वाचार्यैरित्युक्तम्—

जीवितं तदपि जीवितमध्ये गण्यते सुकृतिभिः किमु पुंसाम् ।
ज्ञानविक्रमकलाकुललज्जात्यागभोगविभुताविकलं यत् ॥ १ ॥

ततश्च स श्रेष्ठिपुत्रोऽन्यान्यपि कलत्राणि विधिना परिणीतवान् । तथा तस्मिन्नगरे निजभुजोपात्तवित्तकृतार्थनाय स महोत्तुङ्गं जिनभवनं कारयामास । ततः परं स चिरं भोगान् भुक्त्वा पुत्रे जाते सति सद्गुरुसमीपे धर्ममाकर्ण्य प्रतिबोधं प्राप्य जातवैराग्यः सन् संयमं प्रतिपद्य त्रिकरणशुध्द्या प्रतिपाल्य प्रान्ते समाधिना मृत्वा स्वर्गं ययौ । तत्र विविधानि सुखानि भुक्त्वा क्रमेण मोक्षपदमपि प्राप ॥ अत्रोपनयः कार्यः—

सुकुलं मर्त्यजन्मेदं भव्यप्राणी वणिक्सुतः । जनको धर्मबोधश्च गुरुर्वा हितकारकः ॥ १ ॥
श्रद्धादिजनितप्रोत्साहना वेश्यावचःसमा । पुण्यलक्ष्म्या उपचयं कर्तुं सापि भवेद्यतः ॥ २ ॥
मूल्यद्रव्यं च चारित्रमर्पितं गुरुणा स्वयम् । अनिष्टपूर्निषेधश्च स्मारणा वारणा गुरोः ॥ ३ ॥
संयमोऽयं महापोतस्तरणीयो भवाम्बुधिः । कर्णधारकतुल्याश्च साधर्मिकतपोधनाः ॥ ४ ॥
भवितव्यनियोगाद्भः प्रमादः परिकीर्तितः । अनीतिपुरसंकाशं दुःप्रवृत्तिप्रवर्तनम् ॥ ५ ॥

विज्ञप्तः—'तव पुत्रो रत्नचूडनामा घनं धनमुपार्ज्य क्रमेण समेतोऽस्ति'। इत्युक्ते श्रेष्ठिनोचितदानेन तं संतोष्य बहुगेहापकेन सं-
मुखगमनं विधाय महोत्सवेन समं स्वसुतः सप्रियोऽपि निजवेश्मनि समानिन्ये। तदनन्तरं स पुत्रः सप्रियोऽपि पितुस्तथा मातुश्चरण-
द्वयं ननाम। ततश्च मातापितृभ्यां शुभाशिषं दत्वा स श्लाघितः। ततः परं पित्रा पृष्टः सन् स समग्रमपि स्वकीयं वृत्तान्तं पितुरग्रे स-
माख्यातवान्। तदा जनकोऽपि तं समाचारमाकर्ण्य हृदये प्रकृष्टप्रमोदवान् जातः। परं तु वचसा पुत्रगुणानां घनं वर्णनं
न व्यधात् यदुक्तम्—

**प्रत्यक्षे गुरवः स्तुत्याः परोक्षे मित्रबान्धवाः। कर्मान्ते दासभृत्याश्च पुत्रो नैव मृताः स्त्रियः॥ १॥**

तथा स्वजनलोकः समग्रोऽप्यक्षतपात्राणि गृहीत्वा तस्य श्रेष्ठिनो गृहे समागतः। तदा श्रेष्ठिनापि यथायोग्यं तं जनं संमा-
न्य विसर्जनं कृतम्। एतावता सौभाग्यमञ्जरी नाम गणिकाप्येतन्मिलनाय तस्य मन्दिरे समागात्। तदा तेन रत्नचूडेन तां प्रवरासन
उपवेश्यैवं प्रजल्पितम्—

**"नष्टे त्वदुपदेशेन गत्वा देशान्तरे मया। उपार्जितेयं कमला कमलाक्षी च वल्लभा॥ १॥"**

इति निगद्य वस्त्राभरणसमूहप्रदानेन यदा सा विसृष्टा, तदा तयेत्युक्तम्—'अहमपि नृपाज्ञया तव प्रिया भवि-
ष्यामि'। इत्युक्त्वा सा स्वस्थानं गता। ततश्च स श्रेष्ठिपुत्रः प्रवरं ढौकनमुपादाय तं पुराधीश्वरं नृपं प्रणनाम। तदा च नृपादेशेन सा
सौभाग्यमञ्जरी गणिकापि तत्प्रिया बभूव। तदनन्तरं तेन रत्नचूडेन पितुर्द्रव्यं पितुः परिग्रहे कृत्वा शेषद्रव्येण त्यागभोगादिकं

नृपाग्रे चारुमोदकादिभक्ष्यं तथा शीतलं सलिलं मुक्तम् । तदा राज्ञा सहर्षितेन तस्य भिल्लस्यापि तन्मोदकादिभक्ष्यं दापितम् । ततः सुखासन उपवेश्य स्वोपकारिणं तं भिल्लं सार्थे नीत्वा स राजा स्वपुरे गतः । तदनन्तरं तस्य पुलिन्दस्य स्नानं कारयित्वा चारुवस्त्राणि परिधाप्य भूषणैर्विभूष्य श्रीखण्डादिभिर्विलेपनं विधाय शालिदालिप्रभृतिकं सद्भोज्यं भोजयित्वा त्रयोदशगुणान्वितं ताम्बूलं नृपतिर्दापयामास । तथा भूपादेशात् स रम्यवेश्मनि प्रवरशय्यायां शयनं चकार । तुष्टेन नृपेण तस्य पुलिन्दस्य निःशेषमपि दारिद्र्यमपहृतम् । स इत्थं संप्राप्तसौख्योऽपि स्वचित्ते तद्वनं न विसस्मार । यदुक्तम्—

जणणी य जम्मभूमी, पच्छिमनिद्दाय अभिनवं पिम्मं ।
सज्जणजणाण गुट्ठी, पंच वि दुक्खेहिं मुंचंति ॥ १ ॥

तत्र यः स्वेच्छाविहारस्तथा या निजा प्रिया स्वकीयः परिवार इत्येवमादिकं तस्य कदापि न विस्मृतम् यथा च—

कंकेल्लिपल्लवाहारं सुन्दरे नन्दने वने । चरन्नपि स्मरत्येव करभः स्वां मरुस्थलीम् ॥ १ ॥

तथा सोऽपि पुलिन्दः स्वचित्ते नित्यमेव स्वस्थानादिकं स्मरन्नपि पत्तिभिर्दिवानिशं वेष्टितोऽस्ति । अतः कारणात्स स्वस्थाने गन्तुमशक्नुवन् कियन्तं कालं तत्रैव तस्थौ । एकदा वर्षाकाले संजाते तोयदे गर्जितं कुर्वति, निरन्तरं विद्युज्झात्कारे जायमाने स विरहपीडितो बभूव । यदुक्तम्—

ण श्रीशान्तिजिनभगवता धरित्रीपीठे विहारं कुर्वता द्विषष्टिसहस्रा मुनयो दीक्षिताः । तथैकषष्टिसहस्राणि षट्शतैरधिकानि प्रभुणा शीलशोभिताः श्रमण्यो विहिताः । श्रीसम्यक्त्वमूलसुश्राद्धधर्मधारकाणां जीवाजीवादितत्त्ववेदिनां रक्षोयक्षदेवाद्यैर्धर्मादक्षोभ्याणामस्थिमज्जानुरागेण श्रीजिनधर्मानुरक्तानां जिनवाक्यमेव तत्त्वरूपं मन्यमानानां चतुःपर्वीदिनेषु पौषधग्रहकारिणां प्रत्यहं निरवद्यदानेन मुनिसत्कारकारिणां श्रीशान्तिजिनप्रतिबुद्धानां सदा विशुद्धानामगारिणां नवतिसहस्राधिका लक्षद्वयी संजज्ञे । तथा जगद्भर्थस्य विशिष्टगुणधारिण्यः श्राविकाश्रीणि लक्षाणि त्रिनवतिसहस्रयुतानि जाताः । तथा चाजिनानां जिनेन्द्रवदतीतानागतवर्तमानस्वरूपवेदिनां चतुर्दशपूर्वभृतां सहस्राष्टकं बभूव । तथा संख्यातान्मनुष्यभवान् यावद्रूपिद्रव्याणि पश्यतामवधिज्ञानिनां संहस्रत्रितयं समभवत् । तथा सार्धद्वितीयद्वीपमध्यस्थितानां संज्ञिनां जीवानां मनःपर्यायं विजानतां मनःपर्यवज्ञानिनां सहस्रचतुष्कमभूत् । तथा केवलज्ञानिनां चतुःसहस्राणि त्रिशत्याधिकानि बभूवुः । तथा षट्सहस्रसंख्यया वैक्रियलब्धिमन्तो मुनयः श्रीभगवत्परिवारोऽभूवन् । द्विसहस्रसंख्याश्चतुःशताधिका वादिनोऽभवन् ॥

॥ इति श्रीशान्तिजिनस्य परिवारसंख्या प्रोक्ता ॥

तथा तस्य भगवतः शासने वैयावृत्त्यकरः समस्तविघ्नौघनिवारको गरुडनामा यक्षो बभूव । तथा श्रीशान्तिशासने भक्तसान्निध्यकारिणी निर्वाणी नाम शासनदेवता संजज्ञे । तथा श्रीशान्तिजिनस्य चक्रायुधनृपात्मजः कोणाचलाभिधो नृपतिः पर्युपास्तिकरोऽभूत् । तथा श्रीशान्तिजिनशरीरं चत्वारिंशद्धनुःप्रोत्तुङ्गं मृगलाञ्छनं सुवर्णवर्णं त्रिजगत्यप्रतिमरूपं बभूव । तस्य भगवतश्चत्वा-

मेघगर्जारवो विद्युद्विलासः केकिनां स्वरः । दुःसहो विरहार्तानामेकैको यमदण्डवत् ॥ १ ॥

तदानीं विरहव्याकुलेन तेन पुलिन्देन स्वमनसि चिन्तितम्—" यद्यहं वस्त्रालङ्कारं गृहीत्वा यास्यामि, तदा मम पृष्ठे न्याहृतिर्भविष्यति । अतः कारणान्मम नग्नस्यैव गतिः श्रेष्ठा "। एवं विचिन्त्य यामिकान् वञ्चयित्वा स महता कष्टेन रात्रौ नृपमन्दिरान्निःसृत्य शनैः शनैः स्वस्थानं समियाय । तदा तं विपरीतरूपं दृष्ट्वा तत्कुटुम्बं सविस्मितं सत्पप्रच्छ—'भोस्त्वं कः '। इत्युक्ते स प्राह—' अहं भवतामेव कुटुम्बी '। इत्युक्ते परिजनेन स उपलक्ष्येति पृष्टः—" भो एतावन्तं कालं त्वं क्व स्थितः । अथ वा त्वदीया शरीरकान्तिरीदृशी वर्तते तत् किम् ? "। ततश्च तेन पुलिन्देन समग्रोऽपि स्ववृत्तान्तस्तेषामग्रे निवेदितः । तथा तद्ग्रासवासादिकं सुखं यादृशं तत्रानुभूतं तादृशं कथितम् । पुनस्तैः पृष्टम्—' कथय, कीदृशं सुखं त्वयानुभूतम् ? '। इत्युक्ते स तत्प्रतीतोपमानेन तेषां पुरतः सर्वं कथयामास—" सुस्वादुफलकन्दसदृशा मया मोदकास्तत्र भक्षिताः । यथात्र नीवारादि भुज्यते, तथा तत्र शालिदाल्यादिकं भोजनं विहितम् । गुंदिकापत्रतुल्यानि मया तत्र नागवल्लीपत्राणि बुभुजे । तथा शाल्मलीकटकसमानानि मया घनतराणि पूगीफलानि स्वादितानि । वल्कलसदृशानि चारुवस्त्राणि मया परिहितानि । तथा प्रसूनमालासदृशा मयाऽनेकशोऽलङ्कारा धृताः । निम्बिद्धकन्दरासमाने वेश्मनि निवासः कृतः । शिलातलसमाने विपुले शय्यातल्पे मया शयनं कृतम् "। तदा स पुलिन्दः प्रधानस्यापि वस्तुनोऽसारवस्तुभिरुपमानं व्यधात् । तथास्मादृशैरपि संसारवासिजीवानां पुरतः सिद्धिसौख्यमिहलोकानुमानेनोपमीयते "। भगवता सत्यान्न प्रतीत्युक्तम्—

अरस्य स्वामिनस्तीर्थे साधुद्वादशकोटयः । अष्टप्रकारकर्माणि क्षपयित्वा शिवं गताः ॥ ३ ॥
तीर्थे मल्लिजिनेन्द्रस्य केवलज्ञानधारिणाम् । षडत्र कोटयः प्राप्ता निर्वाणं व्रतशालिनाम् ॥४॥
मुनिसुव्रतनाथस्य तीर्थे तीर्थेऽत्र विश्रुते । साधूनां कोटयस्तिस्रः संप्राप्ताः पदमव्ययम् ॥ ५ ॥
तीर्थे नमिजिनस्यापि कोटिरेका महात्मनाम् । सिद्धा तत्रानगाराणां सुविशुद्धक्रियावताम् ॥६॥
एवमन्येऽपि बहवः सिद्धा ये तत्र साधवः । कालेन गच्छता तेऽत्र ग्रन्थे न कथिता मया ॥७॥
येषां तीर्थकृतां तीर्थे सिद्धा कोटीरनूनका । तान्येव कथितान्यत्र सेयं कोटिशिला ततः ॥ ८ ॥
चारणश्रमणैः सिद्धयक्षैर्देवासुरैस्तथा । तद्भक्त्या वन्द्यते नित्यं तीर्थं कोटिशिलाभिधम् ॥९॥
इत्थं शान्तिजिनेश्वरस्य मयका प्रोक्ता भवा द्वादश, श्राद्धद्वादशसंख्यसद्व्रतकथासंलेखनाबन्धुराः।
सच्चक्रायुधनामधेयगणभृद्व्याख्यानसंवर्धिता, व्याख्यातं सकलं चरित्रमपितत्तस्यैव तीर्थेशितुः ॥१०॥
यस्योपसर्गाः स्मरणेन यान्ति, विश्वे यदीयाश्च गुणा न मान्ति ।
मृगाङ्कलक्ष्मा कनकस्य कान्तिः, संघस्य शान्तिं स करोतु शान्तिः ॥ ११ ॥

॥ इति श्रीभावचन्द्रसूरिविरचिते गद्यबन्धे श्रीशान्तिनाथचरिते द्वादशभववर्णनो नाम षष्ठः प्रस्तावः ॥

## ॥ इति श्रीशान्तिनाथचरितम् ॥